THE

PRINCESS OF WALES

SARASWATĪ BHAVANA TEXTS

*No. 38.*

—o—

EDITED BY

GOPĪ NĀTHA KAVIRĀJA

---

THE

# KIRAṆĀVALĪ PRAKĀS'A DĪDHITI






*Printed by*

*Jai Krishna Das Gupta*

*Vidya Vilas Press, Benares City.*

---

1932






# किरणावलीप्रकाशदीधितिः

श्रीरघुनाथशिरोमणि विरचिता ।

लक्ष्मणपुरविश्वविद्यालयस्य न्यायवेदान्तादिशास्त्राध्यापकेन 'एम. ए.' इत्युपाधिधारिणा 'न्यायशास्त्रि'-पदवीसमलंकृतेन श्री**बदरीनाथशर्म्मणा** संशोधनपूर्वकमुपोद्घातादिना विभूष्य सम्पादिता ।

---

THE

# KIRAṆĀVALĪ PRAKĀS'A DĪDHITI

By

RAGHUNĀTHA S'ĪROMAṆI

*Edited with Introduction etc., by*

PANDIT BADRI NATH S'ĀSTRĪ, M. A.,
Lecturer in Sanskrit, Lucknow University,
Lucknow.

---

1932.

# INTRODUCTION.

The following pages embody the text of a commentary on Vardhamāna Upādhyāya's Prakāśa on the Kiraṇāvali of Udayanāchārya. The name of Udayanāchārya is a familiar word in the bibliography of Nyāya-Vaiśeshika Literature, and he occupies a unique position of unequalled eminence in the history of its philosophy.

His Kiraṇāvali as much as his commentary, called Pariśuddhi, on Vāchaspati Miśra's Nyāyavārtika Tātparyaṭīkā, is a standard work on the system to which it belongs, and commands universal respect. It is really a commentary on the Praśastapāda Bhāshya which, though claiming to be itself a commentary on Vaiśeshika Sūtras, is as a matter of fact an independent work based on them.

Of the four commentaries on the Praśastapāda Bhāshya, of which Udayana's work is one, a detailed critical estimate can not be attempted within the brief limits of these pages, but it may be affirmed that the Kiraṇāvalī is probably the most learned and methodical in the whole group.

The Vyomavatī of Vyomaśivāchārya, the Nyāya Kandalī of S'rīdharāchārya and the Nyāya Līlāvatī

of S'rīvatsāchārya (Vallabha) are also valuable works on Vaiśeshika Philosophy. But they are probably not on the same level of literary standard as the Kiraṇāvalī.

Unfortunately however, Udayana could not complete his work. The Kiraṇāvalī breaks up abruptly in the middle of the section on Guṇa.

It is not known however, which of the two works, Kiraṇāvalī and Nyāya Kandalī, preceded the other.

Scholars are of opinion that both Udayana and S'rīdhara were contemporaries. Udayana's date has been given in the Lakshaṇāvalī as 906 S'aka (=984 A.D.). S'rīdhara's date appears in the Nyāya Kandalī as 913 S'aka (=991 A. D.).

That the Kiraṇāvalī was the most popular of the works is evident from the fact that it was recognised as a standard work on Vaiśeshika and drew round itself for several centuries a band of commentators and sub-commentators.

S'rīvatsa's work, unless it happens to be the Nyāya Lilāvatī known to us, has not yet been identified.

There is no commentary known to exist on the Vyomavatī. The Nyāya Kandalī has a single commentary, viz, that attributed to the Jain writer



Rajaśekhara. But the Kirṇāvalī became the centre of activities of a horde of writers. This is certainly an indication of its great popularity.

Among the commentaries on the Kiraṇāvalī may be mentioned the following:—

( a ) Prakāśa by Vardhamāna. no. 45/1-2

( b ) Rasasāra by Vādīndra. no. 5

( c ) Bhāskara by Padmanābha. no. 1

( d ) Yuktikalpataru by Balabhadra.

Of the above the works of Padmanābha and Vādīndra have already appeared in this series. The commentary of Vardhamāna, on which the present work is a sub-commentary, is in the press and is expected to come out shortly in this very series.

On Vardhamāna we have the commentaries of Raghunātha S'iromaṇi, Mathurānātha and others.

Udayanāchārya's works may be tabulated as follows:—

A. ( i ) Ātmatattvaviveka ( known also as Bauddhādhikāra or Bauddhadhikkāra ).

( ii ) Nyāya Kusumañjali.

(iii) Lakshaṇāvalī.

(iv) Prabodhasiddhi.

B. Commentaries on

( i ) Gotama Sūtras ( Nyāyapariśishṭa ).

( ii ) Praśastapāda Bhāshya ( Kiraṇāvalī ).

( iii ) Vāchaspati Miśra's Nyāya Vārtika Tātparya-ṭīkā ( Nyāya Vārtika Tātparya Pariśuddhi or Nyāya Nibandha ).

The age of Vardhamāna is not known with certainty. Being the son of the great Gangeśa Upādhyāya, the author of the Tattvachintāmaṇi and the father of Navya Nyāya, Vardhmāna was undoubtedly one of the foremost logicians of the time. There seems to be reason to believe that he flourished in Mithila by the beginning of the 15th century.

As regards Raghunātha S'iromaṇī however, we are fortunately in possession of certain traditions on which his chronology may be appoximately determined. It is believed that Raghunātha was a pupil of Vāsudeva Sārvabhauma and a classfellow of the great religious reformer Chaitanya Deva. It is difficult to say how far this tradition may be borne out by history. But so for as it goes it seems that S'iromaṇi Bhattāchārya lived towards the end of the 15th century and the beginning of the 16th century, because Chaitanya was born in 1485 A. D. Raghunātha was born in a poor Brāhman family at Navadvīpa towards the end of the 15th century. While still a boy he lost his father. It is said that his mother worked as



a female attendant in the family of Vāsudeva Sārvabhauma. Another view is that Raghunātha was born in Panchakhand in the district of Sylhet. His remote ancestor, named S'rīdharāchārya migrated from Mithilā to Panchakhaṇda in 643 A. D. Raghunātha's father was named Govinda Chakravartī and his mother's name was Sītā Devī. On the death of his father, his poor mother maintained him with great difficulty. During this time the lady started on a pilgrimage in company with some of her own villagers to Nadia and fell seriously ill in the way. Her companions left her with her son alone. She recovered after some days and became disgusted with her own village people for such treatment on their part. She did not return home, but addressed a certain merchant as father and reached Navadvīpa with her son in his company. She saw Vāsudeva Sārvabhauma and began to live in his house. It is believed that Raghunātha was blind of one eye from his very birth and was known as Kāṇa Bhaṭṭa S'iromaṇi. Raghunātha was very intelligent from his boyhood. It is said that at the instance of his mother he went to a student of the tol to bring fire. This student, in order to outwit Raghunātha took out a handful of burning coal and offered it to Raghu-

nātha. Raghunātha however, on account of his presence of wit took some dust in his hand and accepted the offering. Vāsudeva Sārvabhauma noticed this fact on the part of a five-year old boy and undertook to teach him. Raghunātha read with him all the S'āstras which were current in those days iucluding Nyāya S'āstra. It is said that Vāsudeva deputed him to Mithilā for advanced studies in Nyāya under Pakshadhara Mis'ra. This was in the beginning of the 16th century when Raghunātha was only 20 years of age. Raghunātha is said to have discussed with Pakshadhara on the logical necessity of admitting Sāmānyalakshaṇā. Pakshadhara replied tauntingly:—

वक्षोजपानकृत्काण संशये जाग्रति स्फुटे ।
सामान्यलक्षणा कस्मादकस्मादपलाप्यते ॥

Raghunātha replied:—

योऽन्धं करोत्यक्षिमन्तं यश्च बालं प्रबोधयेत् ।
तमेवाध्यापकं मन्ये तदन्ये नामधारिणः ॥

This is followed by a keen controversy which continued long.

Pakshadhara taunted him again:—

आखण्डलः सहस्राक्षो विरूपाक्षस्त्रिलोचनः ।
अन्ये द्विलोचनाः सर्वे को भवानेकलोचनः ॥



Raghunātha replied:—

कुशद्वीपमहाद्वीपनवद्वीपनिवासिनः ।
तर्कसिद्धान्तसिद्धान्तशिरोमणिमनीषिणः ॥

After some time however, Pakshadhara acknowledged his own defeat and conferred upon Raghunātha the privilege of teaching Nyāya in his own tol at Navadvīpa and of conferring degrees. Raghunātha returned home and founded a tol of his own which in course of time became the centre of great intellectual activity.

Lucknow University,
December, 1931.

BADRI NATHA SHASTRI.

# किरणावलीप्रकाशदीधितिः ।

## गुणनिरूपणम् ।

ॐ नमः शिवाय ।

ॐ नमः सर्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥ १ ॥

विनापि धर्मिनिरूपणं धर्मनिरूपणं भवत्येव । तद्ध(१)र्मत्वेन निरूपणं तन्निरूपणाधीनमिति चेत्तद्धर्मितयापि निरूपणं तन्निरूपणाधीनमेव, निरूपितानि च गुणतद्विशेषवत्तया द्रव्याणीत्यत आह । यद्वेति । आत्मनो द्रव्यविशेषस्य निःश्रेयसकारणीभूततत्त्वज्ञानविषयतया प्रथमं द्रव्यस्यैव जिज्ञासितत्वादिति । साधर्म्यवैधर्म्ययोर्निरूपणे हेतुत्वासम्भवादाह । प्रकार इति । तथा च साधर्म्यवैधर्म्यप्रकारकं निरूपणमिति भावः(२) ज्ञानं ज्ञापनम् ।

गुणशब्देनेत्यादि मूलम् । तथा च रूपादिपदसमभिव्याहारात् संस्कारस्योद्बुद्ध(३)त्वाद्गुणशब्दो गुणत्वेन जात्यैवोपस्थापयति । न च गुणत्वेनोपस्थिते गुणत्वविधानमसङ्गतम् ।

---

(१) धर्मत्वेन—इति (ख) पुस्तकस्थपाठः ।

(२) भावः—इति (क) पुस्तके नास्ति ।

(३) संस्कारस्योद्भूतत्वा—इति (क) पुस्तके पाठः ।

स्वरूपेण तद्वत्त्वे लब्धेऽपि हेतुतावच्छेदकविशिष्टहेतुमत्त्वस्यालाभात् तादृशबुद्धेश्चानुमानाङ्गत्वादिति ।

प्रकाशे उद्देश्येति । उद्देश्यतावच्छेदकविधेययोरित्यर्थः ।

मूले तेनेत्यग्रेतनेन उक्तं वेदितव्यमित्यनेन सम्बध्यते । गुणत्वाभिसम्बन्धपदं समवायसम्बन्धेन गुणत्वस्य हेतुत्वबोधनाय । अन्यथा धूमप्रागभाववदवैयर्थ्येऽपि अनतिप्रयोजनकत्वात् समवायस्यापि काल(१)दिसाधारणत्वात् सम्बन्धविशेषेणैव हेतुताया वाच्यत्वात् ।

प्रकाशे यद्रूपावच्छिन्ने यद्रूपविशिष्टे, सिद्धं गुणपदप्रवृत्तिनिमित्ततया । अनुगतत्वेनेति । आत्मसमवेतत्वे सती(२)न्द्रियमात्राग्राह्यत्वे च सतीति पूरणीयम् । तेनात्मत्वमनस्त्वादौ न व्यभिचारः । सत्ताव्याप्यं सत्तासमानाधिकरणसंसर्गाभावप्रतियोगि ।

मूले सामान्यवान् कार्यानाश्रय इति । चेति चेन सामान्यवान् गुण इति समुच्चीयते ।

प्रकाशे स्पर्शराहित्यमिति द्रव्याश्रितत्वकार्यानाश्रयत्वयोरप्युपलक्षणम् । अतएवानुपदं सामान्यवत्त्वं त्विति वक्ष्यति । चक्षुरित्यादि । प्रभादिवारणाय गुणेति योग्यायोग्यसमवेतपरम् । तेषां शुक्लपीतादिव्यक्तीनामेकैकत्वाच्चक्षुरादेश्च नीरूपत्वाददोषः । संयोगादिवारणाय-

(१) कालिकादि—इति (ख) पुस्तके पाठः ।

(२) व्यक्तिविशेषोऽतीन्द्रिय—इति (क) पुस्तके पाठः ।



मात्रेति । द्व्यणुकवत् परमाणोरप्यनभ्युपगमे तु ग्राह्यं ग्रहणयोग्यं गुणो विशेषगुण इति व्याख्येयम् । दैवाच्चक्षुर्मात्रगृहीतोऽपि सांसिद्धिकद्रवत्वव्यक्तिविशेषो द्वीन्द्रियग्रहणयोग्यः । वस्तुतस्तु गुणत्वमधुरत्वसंयोगत्वसमवायत्वादिवद्रूपत्वादयोऽप्यखण्डोपाधय एव । तथात्वादनुयोगितावच्छेदकत्वात् । कर्मेति । सिद्धौ क्रियमाणायां कर्मव्यावृत्तजातौ साध्यायामित्यर्थः । अन्यत्वमन्यत्वविशिष्टम् । सामान्याद्यन्यत्वविशिष्टं भावत्वं जातिनियतं भवेदेवेत्यत आह—यद्वेति ।

मूले रत्नतत्त्वं रत्नत्वव्याप्यजातिविशेषः । उपदेशेति । उपदेशाधीनवाच्यार्थज्ञानसापेक्षेणेत्यर्थः । शब्दस्येन्द्रियसहकारित्वासम्भवात् वाच्यार्थज्ञानस्यावश्यापेक्षणीयत्वाच्च । रूपप्रभाविशेषग्रहणमेवान्वयव्यतिरेकबलाज्जातिविशेषस्य प्रत्यक्षसहकारि तद्विशिष्टस्य पद्मरागादिपदवाच्यताग्रहे परं रूपप्रभा(१)विशेषवान् मणिः पद्मरागादिपदवाच्य इत्युपदेशापेक्षेति तु युक्तम् ।

प्रकाशे सामान्यनियतः सामान्यनियतत्वेन गृहीतः । सामान्यनियतं सामान्यव्याप्यत्वेन गृहीतम् । तस्योपाधेः सामान्यव्याप्यत्वं तदा न गृहीतमत आह—न वेति । गृहीतायां जातौ तद्व्याप्यत्वमपि पश्चाद्ग्रहीष्यत इति भावः । तद्विहापीत्यादि । इन्द्रियमिन्द्रियजन्यं ज्ञानं गुणत्वं गुणत्वविशिष्टस्य गुणपदवाच्यत्वं गुणत्वन्तु प्रत्यक्षासिद्धमिति भावः ।

(१) प्रभारूप—इति (क) पुस्तके पाठः ।

पूर्वोक्तपक्षस्यैवोपसंहारार्थोऽयमतो यथाश्रुतमेव साधीय
इत्यपि वदन्ति । उपदेशेन वेति । सहजतो वेत्यपि द्रष्टव्यम् ।
मतभेदेन चैतत् । अतिप्रसञ्जकत्वात् । तुल्यन्यायतया रूपा-
न्यत्वादिविशेषितेन जात्यन्तरासिद्धापादकत्वात् । संयोगवि-
भागयोरनपेक्षकारणं कर्मेति सूत्रम् । अनपेक्षत्वं स्वाधि-
करणकालध्वंसाधिकरणक्षणोत्पत्तिकभावानपेक्षत्वम् । एकै-
कानपेक्षकारणत्वं संयोगविभागयोरतिप्रसक्त(१)मतो द्वयमुक्त-
(२)म् । यद्यप्यङ्गुलीकर्मजनितशाखाङ्गुलीसंयोगस्य हस्तशाखा-
संयोगं स्वसामानकालोत्पन्नशाखाकर्मजनितशाखाङ्गुलीविभागश्च
प्रत्यनपेक्षकारणत्वम् । तथापि स्वपश्चाद्भाव्यनपेक्षस्वजन्यविभा-
गाधीनसंयोगजनकजातीयत्वं विवक्षितम् । अङ्गुलीतरुसंयोगज-
न्यहस्ततरुसंयोगानुकूलो हस्तपूर्वदेशविभागो नाङ्गुलीतरुसंयोग-
जन्य इति नातिप्रसङ्गः । संयोगविभागोभयासमवायिकारण-
तावच्छेदकरूपवत्त्वं संयोगजनकविभागासमवायिकारणजातीय-
त्वं वा, अनपेक्षकारणत्वस्यासमवाय्यन्तरानिरपेक्षकारणत्वरूप-
स्यासमवायिकारणत्वे पर्यवसानात् । संयोगस्तु विभागस्य नि-
मित्तं नासमवायीति मूल एव सुव्यक्तम् । प्रतिबन्धकीभूतसंयो-
गापनयनेनान्यथासिद्धो विभागो नोत्तरसंयोगजनक इत्यपि वा-
र्तिकादौ । संयोगस्य विभागासमवायिकारणताभ्युपगमे तु प्र-

(१) संयोगविभागयोरतिसंयोगजसंयोगविभागजविभागस्थले
प्रसक्त-इति क पुस्तके पाठः ।

(२) द्वयमप्युपात्तम्—इति (ख) पुस्तके पाठः ।



योज्यप्रयोजकभावापन्नसंयोगविभागोभयासमवायिकारणजाती-
यत्वं वाच्यम् । स्वजन्यविभागनाशकसंयोगासमवायिकारणवृ-
त्तिसत्तान्यधर्मसमवायित्वं वा तत्त्वम् । चलत्यवयविन्यवयवानां
निश्चलत्वाभावादवयविकर्मोत्पादे यावदवयवानां कर्मोत्पत्तिर्निय-
तेति वैशेषिकवृद्धाः । यावदवयवकर्मनियतमित्यन्ये । वक्ष्यति
च भाष्यकारो विभागग्रन्थे । अंशौ कर्मोत्पत्त्यनन्तरं तदारब्ध-
तन्तौ कर्म । द्वयमप्यौत्सर्गिकम् । त्र्यणुकादेर्विनष्टत्वात्कपाला-
दौ विद्यमानेन कर्मणा प्रतिबन्धाद्वा तत्र कर्मानुत्पादेऽपि स्वसा-
मग्रीबलाज्जायमानस्य घटादिकर्मणो वारयितुमशक्य(१)त्वा-
दिति तु नैयायिकाः । मतत्रयेऽपि क्वचिदजनितसंयोगस्यापि
विनाशः अवयविक्रियायाः स्वसमानकालोत्पन्नावयवक्रियादि-
क्रमेणोत्तरसंयोगजननयोग्यकाल एवाश्रयविनाशादन्तिममत-
द्वये चावयविविनाशसामग्रीकाले जातस्यावयविकर्मणोऽजनित-
विभागसंयोगस्य तत्पूर्वकालोत्पन्नस्य वा जनितसंयोगस्य विना-
शो विनश्यदवस्थे (२)समवायिनि कार्योत्पत्तेरविरोधात् । आ-
श्रयनाशजन्यं द्वित्वपरत्वादिनाशं व्युत्पादयता भाष्यकारेणाभि-
धानाच्च । अतस्तज्जातीयेति । संयोगविभागपदयोर्विशे-
षपरतया संयोगाजन्यसंयोगासमवायिकारणतावच्छेदकरूपवत्त्वं
विभागाजन्यविभागासमवायिकारणतावच्छेदकरूपवत्त्वमिति ल-
क्षणद्वये तात्पर्यमित्यपि कश्चित् । एवं कर्मणो द्वित्रिक्षणावस्था-

(१) वारयितुमभाष्यत्वादिति—इति (क) पुस्तके पाठः ।

(२) विनश्यदवस्थेऽपि—इति (ख) पुस्तके पाठः ।

यित्वं व्युत्पादितम् । चतुःक्षणावस्थायित्वं च सुप्रसिद्धम् । आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकस्य पञ्चक्षणावस्थायित्वम् । क्वचिदन्यथापि । तद्यथा—कर्मादिक्रमेण शरीरे पूर्वसंयोगनाशः शाखायां च कर्मैकैकः कालः शाखाकर्मणा शाखाकाशविभागः शरीरकर्मणा च शरीरशाखासंयोगः । तयोर्विभागस्तु तदानीं नोत्पद्यते संयोगविरहात् । असंयुक्तयोर्विभागजननेऽतिप्रसङ्गात् । अथ शाखाकाशयोर्विभागात्तयोः संयोगनाशः । शाखाकर्मणा च शाखाशरीरविभागः । यथा च कर्मणः स्वोत्तरभाविसंयोगापेक्षित्वेऽपि न क्षतिस्तथोक्तमधस्तात् । ततः शाखाशरीरयोः संयोगनाशः । तदानीं च शाखायां नोत्तरसंयोगः शरीरात्मकपूर्वदेशसंयोगेन प्रतिबन्धात् । अन्यथा युगपदेव परमाणोः पूर्वापरदेशवृत्तित्व(१)प्रसङ्गात् । पूर्वोत्पन्नस्तु विभागो न तन्नाशकः तदनधिकरणवृत्तित्वात् । अन्यथान्यदीयकर्मजनितविभागवतो विनापि कर्मादिक्रमाकाशादिदेशसंयोगनाशप्रसङ्गात् । ततः शाखाया उत्तरसंयोगस्ततः कर्मनाश इति । एवं पाणिपूर्वसंयोगनाशकालोत्पन्नस्य तस्य षट्क्षणावस्थायित्वम् । पाणिकर्मानन्तरोत्पन्नशरीरकर्मणा पाणिशाखासंयोगेन वा शरीरशाखासंयोगजनने(२) क्षणविलम्बात् । तथाङ्गुल्याः पूर्वसंयोगनाशकालोत्पन्नस्य तस्य सप्तक्षणावस्थायित्वम् । एवं तदवयवतदवयवादीनां पूर्वसंयोगनाशकाले उत्पन्नस्य तस्य तस्या-

(१) वर्तित्व—इति (ख) पुस्तके पाठः ।

(२) संयोगजननेन—इति (क) पुस्तके पाठः ।



धिकाधिकक्षणावस्थायित्वं द्रष्टव्यम् । परम्परासमवायिवृत्तेरेव संयोगात्परम्परासमवेतानिष्ठसंयोगोत्पादस्य कर्मणोऽव्याप्यवृत्तित्वस्य वाभ्युपगमे तूदाहृतस्थले क्षणषट्कमात्रं पञ्चक्षणमात्रं वावस्थायित्वम् । परमाणौ तदवच्छेदेन द्व्यणुकाद्यन्त्यावयविपर्यन्तञ्च युगपदेव कर्मोत्पादात् । संयोगेन विभागो व्याख्यातः । सप्तक्षणावस्थायित्वन्तु मतभेदेन । कारणमात्रविभागजविभागस्थले मूर्त्तान्तरेण संयोगस्य । एवं पूर्वपूर्वमूर्त्तविभागकाले उत्तरोत्तरमूर्तसंयोगस्योत्पादे(१)ऽधिकाधिककालावस्थायित्वमिति वदन्ति ।

स्वोत्पत्त्युत्तरेति । स्वोत्तरत्वं स्वध्वंसावच्छिन्नत्वं न च द्रव्यमपि स्वध्वंसावच्छिन्नकालभाविसापेक्षसंयोगजनकमत उत्पत्तीति । तथा च स्वाधिकरणकालोत्तरभाविभावाजन्यो यः स्वजन्यः संयोगस्तदनुकूलविभागजनकजातीयत्वमर्थः । अतो गगनादिनिष्ठसंयोगजनकत्वाच्च पश्चाद्भाविद्रव्यनिष्ठसंयोगजनककर्मणि नाव्याप्तिः, न वा पूर्वोपदर्शितशाखाङ्गुलीसंयोगेऽतिव्याप्तिः । द्रव्यं तु स्वजन्यविभागाधीनं संयोगं जनयदुदीच्यं क्वचिदवयवसंयोगं क्वचिच्च कर्मापेक्षते । अविरुद्धं यत्कार्यं तत्कारित्वं विरुद्धकार्यकारित्वाभावो वा । आद्ये एकजातीयेति । एकजातीयत्वम् अवान्तरजातिमत्त्वम् एकजातिमत्त्वमात्रं वा । आद्ये व्यभिचारादिति । अन्त्ये सत्तयेति । एकेति । रूपत्वादिनैव तादृशत्वोपपत्तेः । द्वितीयं दूषयति—अपि चेति । प्रागभिप्रेतमपि विकल्पं दूषणान्तरमभिधातुमाह—किञ्चेति । कर्मसाधा-

(१) उत्तरोत्तरसंयोगस्योत्पादे—इति (ख) पुस्तके पाठः ।

रणीति(१)। कर्मणा संस्कारस्य जननात्। रूपादावि- त्यादि। अत्रेदं चिन्त्यम्। अनुगतकार्यस्यानुगतकारणनिय- म्यत्वादनुगतं कारणतावच्छेदकं कल्प्यमानम् असति बाधके जातिरूपं सिध्यति। न च प्रकृते तादृशं कार्यमस्ति यन्निष्ठका- र्यतानिरूपितकारणतावच्छेदकं गुणत्वं जातिरूपं भवेत्। का- र्यतानवच्छेदकेनापि रूपेण(२)कार्याण्यनुगतीकृत्य तज्जनकत्वा- नां यथाकथंचिद्रूपेणानुगतानां वा जनकत्वानामवच्छेदकत्वेन जातिकल्पनेऽनन्तकोटिजातिकल्पनाप्रसङ्गो मानाभावश्चेति। क- श्चित्तु गुणपदशक्यतावच्छेदकत्वेन गुणत्वजातिमाह। (३)तन्न। शब्दानां हि तत्तद्धर्मविशिष्टानामर्थानां बोधकताया विना तत्र वृत्तिमनुपपत्तेः वृत्तौ कल्प्यमानायामसति बाधके शक्तिःसिध्य- ति। न चेह गुणत्वं तद्विशिष्टबोधकत्वं वा प्रतीतम्। प्रकारा- न्तरेण सिद्धायाः शक्तेरवच्छेदकत्वेन जातेः कल्पने तु विश्वा- दिपदशक्यतावच्छेदकत्वेनापि(४)जातयः कल्प्येरन्। एवं ह- रिपदादिशक्यतावच्छेदकत्वेन चन्द्रादौ तथा सति चन्द्रत्वादि- ना प्रतीतिर्न स्यादिति चेत् इहापि रूपत्वादिना न सा स्यादि- ति समानम्। अपि च लौकिकानां गुणव्यवहारोऽतिप्रसक्तो ब- लादावप्रसक्तश्च परत्वादौ। तान्त्रिकाणां तु स्वस्वपरिभाषयो-

(१) द्रव्यकर्मसाधारणीति—इति (क) पुस्तके पाठः।
(२) येन केनापि रूपेण—इति (ख) पुस्तके पाठः।
(३) गुणत्वसिद्धिमाह—इति (ख) पुस्तके पाठः।
(४) भाष्यतावच्छेदकत्वेनापि—इति (क) पुस्तके पाठः।



पपद्यमानो न जातिसाधको न वा तुल्यरूपः केषांचित् परत्वा- दौ सङ्ख्यायां शब्दे चाऽसत्त्वात् केषांचित् कर्मण्यपि सत्त्वा- च्चेति। यद्वेत्यादि। यद्यपि समवायिकारणत्वासमवायिका- रणत्वाभिन्नं कारणत्वमेव निमित्तकारणत्वं तथापि तादृशकार- णत्वयोरभावद्वयसमानाधिकरणं कारणत्वं प्रागुक्तम् इह तु त- योरन्यतरासमानाधिकरणं तदिति नाभेदः। असमवायिका- रणत्वमित्यत्रासमवायित्वमविवक्षितम्। कारणतान्तरसाधारण- कारणत्वस्यैव जात्यव्यवस्थापकत्वात्। अन्यथा तौ प्रति यद- समवायिकारणत्वातिरिक्तं कारणत्वं तेन द्रव्यगुणसाधारणा जातिः सिध्येत्। विभागेति। यज्जातीयः संयोगो नियमेन विभागपूर्वकस्तेन कर्मन्यतावच्छेदकजातिमान् लभ्यते। संयो- गजसंयोगस्य विनापि विभागं क्वचिदुत्पत्तेः। असाधारणका- रणत्वं च समवायिकारणत्वमसमवायिकारणत्वं च। निमित्त- कारणताया अदृष्टा(१)दिसाधारणत्वात्। तथा च समवायित्वे सति तादृशविजातीयसंयोगसमवायिकारणत्वासमवायिकारण- त्वाभाव इत्यर्थः। तादृशजात्यवच्छिन्नकार्यताप्रतियोगिककार- णत्वरूपं पुनरसाधारणकारणत्वं द्रव्यस्य संयोगत्वावच्छिन्नं प्र- त्येव जनकत्वादुपेक्षितम्। फलितार्थमाह—पदार्थत्वेति। द्र- व्यवृत्तयो द्रव्यमात्रवृत्तयः। एकैकद्रव्यवृत्तित्वेन भिन्नकालीन- द्रव्यद्वयावृत्तित्वेन। द्रव्यत्वसमव्याप्यतावच्छेदकविभाजकोपा- धिमत्त्वं मूलस्वरससिद्धं गौरवादुपेक्ष्याह—द्रव्यत्वेति। द्रव्यत्व-

(१) "अदृष्टादि"—इति (क) पुस्तकस्थपाठः।

पदं द्रव्यत्वत्वपरं तादात्म्येन द्रव्यस्यैव वा व्याप्यत्वमभिमतम् । सत्तासाक्षाद्व्याप्येति । विभ्वीति । वृत्तिः समवायः । समवायसम्बन्धेन धर्मवत्त्वबोधनाय जातीति ।

मूले द्रव्यलक्षणोति । द्रव्यमात्रवृत्तिधर्मविरहेणेत्यर्थः । तस्मिन्निति । द्रव्यत्वव्याप्यसत्त्वे द्रव्यत्वस्याप्यावश्यकत्वादिति भावः । जातिसङ्करेति । द्रव्यत्वस्य गुणत्वव्याप्यत्वे रूपत्वादिवद्गुणविभाजकत्वं स्यात् । गुणत्वस्य च द्रव्यत्वव्याप्यत्वे पृथिवीत्वादिवद्द्रव्यविभाजकत्वं स्यात् । मिथो व्यभिचारित्वे तु सङ्कर इत्यर्थः ।

प्रकाशेऽनिर्मोक्षेति । आश्रयाश्रयिभावापन्नगुणधारायास्तूत्तरोत्तरानुवृत्तावपि पूर्वपूर्वनिवृत्तिसम्भवेन कतिपयात्माशेषविशेषगुणोच्छेदोपपत्तावपि (१)सर्वमुक्तिर्न स्यात् कार्यधारानुवृत्तौ तत्तन्निमित्तीभूतात्मैकगुणादृष्टानुवृत्तेरावश्यकत्वात् । गुणेष्विति । गुणेषु जन्यगुणेषु जातित्वापत्त्येति । जन्यसमवेतानित्यस्य जातित्वनियमादिति भावः ।

मूले मूर्तत्वेति । समानदेशत्वं स्वसमानकालीनद्रव्यान्तरसमवायिसमवेतत्वम् ।

प्रकाशे एतत्त्वान्ताविति समवायेन तथात्वसूचनाय । तेन संयोगेन तत्समानदेशे तन्तौ तेजसि वा न व्यभिचारः । एतदिति भेदद्योतनाय । एकदेति पूरणीयम् । स्वातन्त्र्येण भाष्यं व्याचिख्यासुराचष्टे—निःक्रियत्वं चेति । मूलानुया-

(१) गुणोच्छेदापत्तावपि—(ख) पुस्तके पाठः ।



यित्वे विभुनीव मूर्तेऽपि तदतिप्रसक्तेरुद्भावनानर्हत्वात् । क्रियां प्रतीति । क्रियासमवायिकारणतावच्छेदकाभाववद्वृत्तिवृत्तिसत्तान्यधर्मसमवायित्वमर्थः । निःक्रियविनष्टावयवकद्रव्यवृत्तिद्रव्यत्वादिवारणायावच्छेदकेति । अभिप्रेतं भाष्यकृताम् । एवमगुणवत्त्वमपि गुणवद्वृत्तिनिखिलवृत्तिधर्मसमवायित्वं विवक्षणीयम् । नन्वित्यादि । विवक्षितार्थस्य गुणाभावसम्बन्धस्य लाभे नञ्तत्पुरुषात् नञ्समासात् । पर्युदासेति । उपलक्षणं चैतत् । प्रसज्यनञ्बहुव्रीहिणा गुणशून्यवत्त्वमित्यपि(१)द्रष्टव्यम् ।

रूपं यदीति । अवयवित्वमिह द्रव्यसमवायिमात्रसमवेतत्वम् । रूपं यदि रूपवत् स्यात् द्रव्यं स्यात् यदि च द्रव्यं स्यात् घटवृत्ति न स्यादिति तु न्यायः ।

मूले समवायीति । समवायिकारणावृत्तिनित्यवृत्तिजातिमत्त्वमर्थः । ननु कार्यद्रव्ये रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वस्थितिस्थापकानां कारणगुणाधीनानामसम्भवेऽपि द्रव्यान्तरकर्माधीनयोः संयोगविभागयोर्नासम्भव इत्यत आह न चेति । निर्गुण इति व्यधिकरणम् । गुणचतुष्टयं परिमाण(२)परमित्यपि कश्चित् । मूर्तिं न व्यभिचरन्तीत्यस्य संस्कारत्वान्यगुणत्वव्याप्यमूर्तिव्याप्यतावच्छेदकगुणवृत्तिजातिमन्त इत्यर्थः । मूर्तिविरोधिन इत्यस्य च संस्कारत्वान्यगुणत्वव्याप्यजात्यव्याप्यमूर्त्यभावव्याप्यतावच्छेदक-

(१) मित्यादि—इति (ख) पुस्तके ।
(२) संख्यापरिमाण—इति (ख) पुस्तके पाठः ।

जातिमन्तो मूर्त्यभावव्याप्यतावच्छेदकपरिमाणावृत्तिजातिमन्त इति वार्थः।परममहत्त्वत्वजात्यनभ्युपगमे मूर्त्यभावव्याप्यतावच्छेदकजातिमन्त इत्यर्थो भाष्यसन्दर्भाविरुद्धः ।

प्रकाशे मूर्त्तवृत्तिनेति । मूर्त्तमात्रवृत्तितेत्यर्थः । गुणत्वव्याप्येति । गुणवृत्तीत्यर्थः । मूर्त्तीति । विरोधित्वं सामानाधिकरण्याभावः(१) । स्मृतिहेतुत्वं स्मृतिहेतुतावच्छेदिका जातिः । द्रव्यत्वावच्छिन्नेति । पूर्ववद्गुणत्वव्याप्यत्वं गुणत्वन्यूनवृत्तित्वं गुणनिष्ठसंसर्गाभावप्रतियोगित्वमिति यावत् । जातिपदं च समवायेन तादृशधर्मवत्त्वलाभाय । एवमेवोत्तरत्र यथास्थानं बोध्यम् । स्वाश्रयेति । अत्यन्ताभावः प्रतियोग्यसमानाधिकरणः । अन्योन्याभावश्च प्रतियोग्यवृत्तिर्बोध्यः।तेन संयोगादेरत्यन्ताभावस्य केवलान्वयित्वेऽपि न तत्राव्याप्तिः, न वा एको न द्वाविति प्रतीतिबलाद् द्वित्वाद्यवच्छिन्नस्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणे रूपादावतिव्याप्तिः । एवमेवोत्तरत्रापि । द्वित्वाद्यभावस्य द्रव्यत्वाद्यवच्छिन्नान्योन्याभावव्यापकत्वेऽपि स्वाश्रयान्योन्याभावसमानाधिकरणात्यन्ताभावप्रतियोगित्वसामान्याभावरूपं तद्व्यापकत्वं नास्तीति नासम्भवः । स्वाश्रयप्रतियोगिकान्योन्याभावसामानाधिकरण्यमात्रेणैव सामञ्जस्ये गुरुतरारम्भो ये ये तादृशाभावप्रतियोगिनस्तत्तदन्यत्वसमुदायस्यानुगतस्य लाभाय । घटादिव्यावर्त्तनाय गुणपदम् । अ-

(१) मूर्त्तिविरोधित्वं मूर्त्तिसामानाधिकरण्याभावः—इति (ख) पुस्तके ।



न्योन्याभावेत्येवेति पाठे तु अन्योन्याभावपदं स्वाश्रयान्योन्याभावपरम्।एवमुत्तरत्रापि । एकत्वाव्याप्यत्वं स्वाव्यापकयावदेकत्वकत्वं प्रतियोग्यसमानाधिकरणस्वसमानाधिकरणात्यन्ताभावप्रतियोगियावदेकत्वकत्वम् । एकत्वत्वव्यापकतादृशाभावप्रतियोगिताकत्वमिति यावत् । (१) अवृत्ताविति । तादृशगुणत्वाभिधाने तु नायं दोषः । स्वाश्रयेति । स्वाश्रयप्रतियोगिकान्योन्याभावव्याप्यत्वावच्छिन्नात्यन्ताभावसामानाधिकरण्यमित्यर्थः । द्वित्वादीनां स्वाश्रयान्योन्याभावव्याप्यगुणत्वाद्यभावसमानाधिकरणत्वाद्व्याप्यत्वावच्छिन्नेति । मेयत्वद्रव्यत्वादेरपि तादृशाभावसमानाधिकरणत्वान्नियमांशोपादानम् । द्वित्वादौ तु द्रव्यमात्रस्यैव तदाश्रयप्रतियोगिकान्योन्याभावव्याप्यधर्मवत्त्वान्नातिप्रसङ्गः । यथोक्तविशेषणविशेष्यभावे च न व्याप्यपदवैयर्थ्यम् । वैयधिकरण्यानधिकरणत्वामिति पाठे तु स्वाश्रयनिष्ठोऽन्योन्याभावो व्याप्यं वार्थात् स्वस्य बोध्यम् । तथा च स्वाश्रये योऽन्योन्याभावस्तद्विरुद्धमधिकरणं तत्प्रतियोगीति यावत् । तद्वृत्तित्वानाधिकरणत्वं स्वव्याप्यस्य वैयधिकरण्यं तत्प्रतियोगिकात्यन्ताभावसामानाधिकरण्यं तदनधिकरणत्वं तत्सामान्याभाववत्त्वमिति लक्षणद्वये तात्पर्यम् । अत्र चैकत्वादेरपि स्वव्याप्यपरिमाणादेर्व्यासज्यवृत्तिधर्मावच्छिन्नस्याभावस्याव्यासज्यवृत्तिधर्मावच्छिन्नस्य चोत्पत्तिका-

(१) प्रतियोग्यसमानाधिकरणस्वसमानाधिकरणैकत्वात्यन्ताभावसमानाधिकरणगुणत्वं तु न युक्तम् । एकत्वेति वैयर्थ्यात् ।—इति (ख) पुस्तकेऽधिकः पाठः ।

लावच्छेदेनाधिकरणे वर्त्तमानत्वात् प्रतियोग्यसामानाधिकरण्यस्याभावविशेषणत्वध्रौव्ये व्याप्यतायां संयोगादिवारणमात्रप्रयोजनको नियमांशो नोपादेयः। स्वाश्रयेति। स्वाश्रयप्रतियोगिकान्योन्याभावस्य योऽत्यन्ताभावस्तद्व्याप्यत्वं तदत्यन्ताभावासामानाधिकरण्यम्। स्वाश्रयान्योन्याभावासामानाधिकरण्यमिति तु फलितार्थः स्वसमानाधिकरणाभावाप्रतियोगिद्वित्वसमानाधिकरणाभावप्रतियोगिगुणत्वम् एकवृत्तित्वम्। तादृशप्रतियोग्यन्यगुणत्वं स्वाभावासमानाधिकरणद्वित्वकगुणत्वं वानेकवृत्तित्वम्। अभावश्च प्रतियोगिव्यधिकरणो बोध्यः (१)। यद्वा जलाजलवृत्तिवृत्त्येकत्वैकपृथक्त्वावृत्तिजातिमत्त्वम् अनेकवृत्तित्वं तादृशजातिशून्यगुणत्वं चैकवृत्तित्वम्।

मूले तस्य गुणा इति भावसाधनं विशेषपदमभिप्रेत्य। करणसाधनत्वे तु कर्मधारयः समासः।

प्रकाशे पृथिवीति। पृथिवीवृत्तिवृत्तिः सती या (२)जलवृत्तिवृत्तिस्तदितरेत्यर्थः। जलपृथिवीगुरुत्वयोर्न मिथो व्यावृत्तजातिमत्त्वं मानाभावात्। निबिडत्वादिवारणाय संयोगावृत्तीति। कठिनावयवद्वयविभागवृत्तिजलविभागव्यावृत्तशब्दविशेषप्रयोजकजातेस्तेजोवेगातिशयस्य नैमित्तिकद्रवत्वत्वस्य च वारणाय विभागवेगाजलद्रवत्वावृत्तीत्यपि वक्तव्यम्। अत्र च पाथःपृथिव्योः स्पर्शानां रसानां च मिथो वैलक्षण्यमनुभवादस्तु (३) शुक्लरू-

(१) ग्राह्यः—इति (ख) पुस्तके पाठः

(२) सजातीया—इति (क) पुस्तके पाठः।

(३) मनुभवबलादस्तु—इति (ख) पुस्तके पाठः।



पाणां तु न वैलक्षण्यं मानाभावादिति मतेनाह। **भावनेत्यादि।** विशिष्टान्तं जातिविशेषणं भावनायां च भावनान्यत्वविरहाद् विशिष्टव्यतिरेकः। जातिपदं च विभाजकोपाधिपरं तेन परत्वापरत्वयोर्दैशिककालिकसाधारणजातिविरहेऽपि न क्षतिः। पाकजत्वं जलेतरवृत्तित्वं परमाणोरिव द्रवत्वस्य पाकजत्वात्। पाकजन्यतावच्छेदिकैव जातिः न तु तत्प्रयोज्यतावच्छेदिकापि मानाभावात्। अवयविरूपत्वादिकं जातिविशेषो वावयवरूपादिजन्यतावच्छेदकमित्यन्यदेतत्। षट्पदार्थीवारणाय गुणेति। भावनाभिन्नजन्यैकत्वव्यापकतावच्छेदकस्पर्शावृत्तिधर्मसमवाय्यन्यत्वे सति गुरुत्वजल(१)द्रवत्वान्यगुणत्वं वा तत्त्वम्। भावनोपग्रहाय भिन्नान्तं समवायिविशेषणम्। परत्वापरत्वयोर्व्युदासाय जन्येति। कालिकयोर्जन्यद्रव्यमात्रे दैशिकयोश्च मूर्तमात्र एव वृत्तेरुपगमात् असम्भववारणाय स्पर्शोपग्रहाय च स्पर्शावृत्तीति। भावनान्यवायुवृत्तिवृत्तिस्पर्शावृत्तिसमवाय्यन्यत्वे सति तादृशगुणत्वं वा तत्त्वम्। भावनान्यत्वं विहाय संस्कारत्वान्येति वा धर्मविशेषणम्। द्रव्यत्वव्याप्येति। स्वाश्रयसमानाधिकरणो यो द्रव्यविभाजकोपाधिस्तदवच्छिन्नाद्यावन्तीतराणि तेभ्यो भेदानां प्रयोजिका तावन्निष्ठाभावप्रतियोगितावच्छेदिका या गुणत्वव्याप्यजातिस्तद्वत्त्वमित्यर्थः। स्वाश्रयसमानाधिकरणद्रव्यविभाजकोपाध्यभावसमानाधिकरणावृत्तिजातिमद्गुणत्वं यत्किञ्चिद्द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकजाति-

(१) गुरुत्वाजल—इति (ख) पुस्तके पाठः।

मद्गुण(१)त्वमिति वा फलितार्थः। घटादिवारणाय गुणेति। व्याप्यसमानियते व्याप्तत्वसमव्याप्तत्वावच्छेदके, आत्मत्वावच्छिन्नेषु सर्वेष्वात्मेतरभेदप्रयोजकत्वाभावात्। आत्मत्वसमव्याप्तत्वावच्छेदकजातिविरहादिति भावः। एवं रूपाद्यव्याप्तिरपि द्रष्टव्या। रक्तत्वमधुरत्वादीनामतादृशत्वात्। जलरूपादिव्यावृत्तानुगतजातौ मानाभावात्। शुक्लत्वमधुरत्वादिना सङ्करप्रसङ्गाच्च। नीरसस्य विशुद्धस्य(२)पार्थिवस्योपगमाच्च। द्रव्येति। नयनस्पर्शनोभयग्राह्यभिन्नेत्यग्राह्यान्तार्थः। चक्षुर्मात्रग्राह्यस्य तेजोविशेषवृत्तेः प्रभात्वस्य वारणाय गुणत्वव्याप्येति गुणवृत्त्यर्थकम्। त्रसरेणुपरिमाणमात्रवृत्तिजातेस्त्वगग्राह्यत्वे तु गुणत्वसाक्षाद्व्याप्यार्थकम्। समुदितवाक्यतात्पर्यविषयमर्थमभिधाय एकैकपदप्रयोजनमाह—योग्या इत्यादिना। अथ विषयत्वेन मानससाक्षात्कारजनकत्वं वाच्यम्, न चादृष्टं विषयतया जनकं किन्तु निमित्ततयेत्यत आह-ईश्वरेति। आत्मसंख्यापरिमाणयोर्वर्तमाने संख्यात्वपरिमाणत्वे आदाय संख्यापरिमाणयोरतिव्याप्तेः बहिरिति। रूपत्वादिवारणायाविषयान्तम्। साक्षात्कारोऽत्र लौकिको बोध्यः। अजन्यान्तद्वयाच्च जन्यपदसहिताद् द्वितीयसाक्षात्कारविशेषणात्तल्लौकिकत्वलाभः। आत्मत्ववारणाय गुणत्वव्याप्येति। परममहत्त्वत्वजातिपक्षे

(१) जातिमद्गुण—इति (ख) पुस्तके नास्ति।
(२) निर्गन्धस्य च—इति (ख) पुस्तके पाठः॥



साक्षाद्व्याप्यत्वं बोध्यम्। चाक्षुषनिर्विकल्पकाविषयमानसनिर्विकल्पकविषयजातिमद्गुणत्वं संख्यापरिमाणावृत्तिमानसनिर्विकल्पकविषयजातिमद्गुणत्वं वा तत्त्वम्। सार्वज्ञ्यान्यथानुपपत्त्या च योगजधर्मस्यापि निर्विकल्पकजनकत्वे तदजन्यत्वेन निर्विकल्पकं विशेषणीयम्। ज्ञानत्वादेः सविकल्पकमात्रवेद्यत्वमते निर्विकल्पकत्वमपहाय लौकिकत्वेन मानसं विशेषणीयम्। आंशिकं वा निर्विकल्पकत्वं वक्तव्यम्। तच्च तत्रेतरप्रकारकत्वे(१)सतीतरत्र तदप्रकारकत्वम्, तेन यद्यदभिधेयं तत्प्रमेयं गुरुत्वं जानामीत्यादिमानसव्युदासः। ज्ञानकारणचक्षुःसंयुक्तसमवेतसमवायशून्य(२)ज्ञानकारणमनःसंयुक्तसमवेतसमवायशालिजातिमत्त्वं संख्यापरिपाणावृत्तिज्ञानकारणमनःसंयुक्तसमवेतसमवायशालिधर्मसमवायित्वं वा तत्त्वम्। (३)शून्यत्वं शून्यगुणत्वम्। साक्षादित्यणुत्वत्वादिवारणाय।

भाष्ये-अपाकजेति। पाकं विना जातमपाकजम्। जन्म च गन्धं विना स्नेहान्तानां विशेषणम्। पाकविरहस्तु पाकजजातीयानां जन्मनि विशेषणम्, उपरञ्जकन्तु तदन्येषाम्। तेन नित्यचक्र(४)व्युदासः। वेगपदं च कर्मजन्यवेगपरम् उपलक्षकं च जन्यस्थितिस्थापकस्यापि। कर्माजन्यभावनातिरिक्त-

(१) तत्रेतराप्रकारत्वे—इति (ख) पुस्तके पाठः।
(२) शून्यत्वे सति—इति (ख) पुस्तके पाठः।
(३) वर्ग—इति (ख) पुस्तके।
(४) मध्यपतितं-इति (ख) पुस्तके।

संस्कारपरं वा । एवं च गन्धं विना सर्वत्रैव विशेषणं जन्म। कारणं स्वाश्रयस्य समयिकारणं स्वाश्रयसमवायीति यावत्। तद्गुणजन्याः। स्वाश्रयसमवेताजन्यत्वे सतीति पूरणीयमिति तु तत्त्वम्। अत्र च मध्यपठितं(१) परिमाणादि गुरुत्वान्तं परित्यज्य द्रवत्वेऽपाकजत्वान्वयं वदतामाचार्याणां पार्थिवपरमाणुगुरुत्वस्याजन्यत्वमभिमतम्। (२)लीलावतीकारस्तु भस्मीभावदशायामवयविनि गुरुत्वापकर्षस्य दर्शनात् तदन्यथानुपपत्त्या पार्थिवपरमाणुगुरुत्वस्यापि पाकजत्वमनुमेने।

अवयवावयविनोरेकत्वाभ्यां जनितस्य द्वित्वस्य वारणाय मूले—सजातीयेति। साजात्यं गुणत्वव्याप्यव्याप्यजात्या। स्नेहे चोत्कर्षापकर्षावेव तादृश्यौ जाती। पार्थिवादिद्रवत्वेषु द्रवत्वत्वव्याप्यजातिभेदाः। संयोगजविभागजाभ्यामपि संयोगविभागाभ्यां संयोगविभागयोर्जननादाह–कारणेति। वस्तुतस्तु सजातीयेति प्रायिकं स्वरूपकथनपरं न तु विवक्षितमपि। अणुत्वाद्यव्याप्तिप्रसङ्गात्, (३) मात्रपदोपसन्दानाच्च! अकारणगुणपूर्वकत्वे सति(४) कारणगुणपूर्वकत्वलाभान्नोक्तद्वित्वाद्यतिव्याप्तिः।

प्रकाशे–अयोग्यत्वात्।विशेषणत्वायोग्यत्वात्। परिमाणादौ

(१) अभिप्रेतम्—इति (ख) पुस्तके।

(२) तेनाणुत्वादौ नाव्याप्तिः-इति (ख) पुस्तके।

(३) अकारणगुणापूर्वकत्वे सति–इति (ख) पुस्तके।

(४) उत्तरग्रन्था—इति (ख) पुस्तके।



पाकजत्वाभावेन व्यवच्छेदकत्वायोगात्। कारणद्वयं कारणघटितद्वयं कारणाकारणरूपम्। यथाश्रुतस्य कार्ये तावित्यनेनानन्वयात् कारणद्वयसंयोगाभ्यां कारणद्वयविभागाभ्यामिति वा व्याख्येयम्। वक्ष्यति हि भाष्यकारः–तन्तुद्वयाकाशसंयोगाभ्यां पटाकाशसंयोगम्। एतेन विभागो व्याख्यातः। योग्यता साजात्यं तदवच्छेदकत्वं साजात्यनिरूपकत्वम्। तत्सजातीयत्वं गुणत्वसाक्षाद्व्याप्यजात्या न वक्तव्यमिति समुदायार्थः। तज्जन्यतावच्छेदकत्वं तु तदवच्छेदकत्वं न वाच्यं रूपत्वसंख्यात्वादेस्तथात्वासम्भवेन ग्रन्था(१)सङ्गतेरिति। तथापीत्यादि। साक्षादिति भेदेन व्याप्तिसूचनाय। पाकजानामपि गुणत्वपरम्पराव्याप्यशुक्लत्वादिजातिमत्त्वादाह–यद्वेति। सजातीयगुणेति। यथामूलं स्वरूपकथनं न तु विवक्षितम्। (२)व्यक्तीति। निरुक्तकारणगुणपूर्वकत्वाभावस्य पाकजादावतिप्रसक्तत्वात् स्वाश्रयस्य यदकारणं तद्गुणपूर्वकत्वस्य च बुद्ध्यादावप्रसक्तत्वाद‌तिप्रसक्तत्वाच्च द्वित्वादौ वक्तव्यस्यात्ममनोयोगपूर्वकत्वादेरननुगतत्वेनेत्यर्थः। नित्यवृत्तिमात्रवृत्तित्वमत्यन्तापकृष्टपरमाणुगुरुत्वजन्यपतनापकर्षविशेषेऽतिप्रसक्तमतो गुणत्वव्याप्येति गुणवृत्त्यर्थकम्। तन्मात्रवृत्तित्वं चेह तदितरावृत्तित्वं

(१) अत एव पूर्वोक्तरीत्याणुत्वे नाव्याप्तिः–इति (ख) पुस्तकेऽधिकः पाठः।

(२)

शेषवैयर्थ्यात् । परमेति । महत्त्वमणुत्वस्याप्युपलक्षकम्(१) कारणगुणपूर्वकवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यविशेषगुणत्वं मूलस्वरससिद्धं गौरवादुपेक्ष्याह—विभिन्नाति । प्रशिथिलसंयोगविशेषस्यैव प्रचयत्वेन प्रतिद्धतया तच्छून्यकठिनावयवसंयोगविशेषजनितपरिमाणस्यासङ्ग्रहमाशङ्क्य निराकुरुते न चेति । मात्रपदमसमवायिकारणान्तरव्यवच्छेदाय । तथा च संख्यापरिमाणातिरिक्तासमवायिकारणजन्येति जन्यान्तस्य पर्यवसितोऽर्थः ।

भाष्ये-उत्तरसंयोगेति । संयोगजसंयोगस्य विभागे चरममभिधानादुत्तरत्वम् ।

सूत्रे (२)-अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः । एतेन विभागो व्याख्यात इति । बुद्धीच्छाप्रयत्ना जन्या ग्राह्याः । संयोगजाः संयोगजगुणाः ।

प्रकाशे ।संयोगासमवायिकारणका इति भाष्यतात्पर्यं(३)स्पष्टयति—संयोगजत्वमिति । कर्मजन्यत्वमात्रं ज्ञानाद्यतिप्रसक्तम् अतः कर्मासमवायीति ।

मूले-आद्याविति । (४)कर्मजयोः संयोगजयोर्विभागयोः

(१) परमेति परमाणुत्वस्याप्युपलक्षकम्—इति (ख)पुस्तके ।

(२) तथाच सूत्रे—इति (ख) पुस्तके ।

(३) इत्यस्य तात्पर्यं—इति (ख) पुस्तके ।

(४) कर्मजयोः संयोगयोर्विभागयोश्च विभागे प्रथममभिधानादाद्यत्वं संयोगजविभागजमूलभूतत्वाद्वा—इति (ख) पुस्तके ।



प्रथमं विभजनात् संयोगजविभागजमूलभूतत्वाद्वाद्यत्वम् । बुद्ध्यपक्षत्वं बुद्धिजन्यत्वं जन्यमात्रस्य, अतो बुद्धिशब्दं विशेषपरतया व्याचष्टे—अपेक्षाबुद्धिजन्या इति ।

प्रकाशे—जातिविशेष इति । उपाधिविशेष इत्यर्थः चाक्षुषत्वादिना सङ्करात् , मानाभावाच्च जातेरसम्भवात् । संस्कारादौ जन्यमात्रे, तस्येश्वरापेक्षाबुद्धिजन्यत्वात् । न चापेक्षाबुद्धित्वेन जनकत्वं विवक्षितं तच्च न क्षणत्रयावस्थायित्वम् अनेकविशेष्यकत्वं वा तादृूप्येण जनकत्वे मानाभावात् । नापि नानैकत्वादिविषयत्वादिकमननुगमात् । मनोगुणेति । गन्धत्वसुखत्ववारणाय—वृत्त्यन्तम् । संयोगत्वादिवारणाय—अवृत्त्यन्तम् । तज्जातीयत्वं च गुणत्वव्याप्यजात्या । परिमाणत्वादिवारणाय—नित्यावृत्तीति । मनोगुणस्य मनोवृत्त्यर्थकत्वात् कर्मत्ववारणाय—गुणत्वव्याप्येति वदन्ति । जातिपदं विभाजकोपाधिपरम् । दैशिककालिकयोः परत्वयोरपरत्वयोश्चैकजातिविरहात् । कालिकयोश्च मनस्यसम्भवात् । विभक्ष्यते च संख्यां भाष्यकारः । "सा पुनरेकद्रव्याऽनेकद्रव्या चेति" पृथक्त्वं च "तत्पुनरेकद्रव्यमनेकद्रव्यं चेति" । मनोगुणेति वा मनोगुणजातीयपरम् । साजात्यं च गुणविभाजकोपाधिना, मनःपदं वा नीरूपाणुपरम् । एवं च द्व्यणुकपरिमाण(१) वृत्तिजातिविशेषवारणाय—गुणत्वव्याप्येति गुणविभाजकोपाधिसाक्षाद्व्याप्यार्थकम् । तत्त्वं च गुणविभाजकधर्मव्याप्यजातव्याप्य-

(१) परिमाणमात्र—इति (ख) पुस्तके ।

जातित्वम्(१)। "रूपादयः स्नेहान्ताः समानजात्यारम्भका" इति भाष्यम् । यद्यपि विजातीयारम्भका अपि संयोगादयो जनयन्ति सजातीयं तथापि विजातीयाजनकत्वे सतीति द्रष्टव्यम् । उष्णस्पर्शस्य पाकजनिमित्तत्वादाह—अनुष्णेति । यद्यपि रूपादिकं ज्ञानसुखादिकं ज्ञातृधर्मं रसो बलपुष्ट्यादि स्पर्शोऽभिघातं स्नेहः संग्रहं जनयति विजातीयं तथापि ज्ञानादिभिन्नमेकाश्रितं वीजातीयमुपादेयम् । यद्यपीत्थमपि ह्रस्वत्वाणुत्वादावन्त्यावयविरूपादावव्याप्तिरतिव्याप्तिश्च दैवादजनितपाकजावयवगतोष्णत्वादौ, तथापि स्वावृत्तिगुणत्वसाक्षाद्व्याप्यजात्याश्रयस्य स्ववृत्तिगुणत्वव्याप्यजात्यनाश्रयगुणस्य वा ज्ञानादिभिन्नैकाश्रितस्य यज्जनकं तदवृत्त्यनेकवृत्त्यवृत्तिभावनान्यसजातीयजनकवृत्तिजातिमन्त इति विवक्षणीयम् । नीलरूपादेः स्वावृत्तिचित्रत्वाश्रयजनकत्वात्—साक्षादिति । स्पर्शस्याभिघातजक्रियानिमित्तत्वोगमाच्च—गुणेति । द्विपृथक्त्वत्वादिवारणायानेकवृत्त्यवृत्तीति । भावनावेगादि(२)वारणाय—भावनान्येत्यादि । परत्वादिवारणाय—सजातीयेति(३) । द्रवत्वत्वादिवारणाय कर्मासमवायिकारणावृत्तित्वेन जातिर्विशेषणीया । एवं प्रत्यक्षत्वेनापि । तेन उष्णस्पर्शनिष्ठानुद्भूतत्वव्युदासः ।

(१) जात्यव्याप्यत्वम्—इति (ख) पुस्तके ।

(२) भावनापरत्वादि—इति (ख) पुस्तके ।

(३) परत्वादिवारणाय सजातीयेति—इति (ख) पुस्तके नास्ति ।



उष्णपदं वोद्भूतोष्णपरम् । इच्छावद्द्वेषस्यापि प्रयत्नद्वारा बाह्यगुणजनकत्वान्नातिप्रसङ्गः । द्वेषान्यत्वं वा वक्तव्यमिति । प्रकाशे स्वनिष्ठेत्यादि । गुरुत्वत्वादिवारणाय सत्यन्तं फलतो जातिविशेषणम् । एकत्वत्वादेः स्वानिष्ठैकत्वत्वादिशून्यद्वित्वाद्यसमवायिकारणैकत्वादिवृत्तित्वाद् गुणत्वव्याप्येति गुणत्वसाक्षाद्व्याप्यपरम् । शून्येत्यत्र सामान्याभावाविवक्षायां स्वनिष्ठेत्यस्य वैयर्थ्यादिति केचित् । अखण्डाभावेन वैयर्थ्यमित्यपरे । वस्तुतस्तु स्वनिष्ठव्याप्यजातिशून्यासमवायिकारणावृत्त्यसमवायिकारणवृत्त्येकवृत्तिमात्रवृत्तिजातिमत्त्वं गुणत्वशून्यासमवायिकारणावृत्त्यसमवायिकारणवृत्त्येकवृत्तिमात्रवृत्तिगुणत्वव्याप्यजातिमत्त्वमिति लक्षणद्वये तात्पर्यम् । आद्ये व्याप्यत्वमपरत्वं तच्च जातिसमानाधिकरणाभावप्रतियोगित्वं सत्तान्यत्वं वा । असिद्धिवारणार्थकस्वनिष्ठपदोपादानादेव कर्मत्वगुरुत्वत्वादीनां निरासः । संख्यात्वपृथक्त्वत्वादिवारणाय-एकवृत्तिमात्रवृत्तीति । द्वितीये गुणत्वशून्येति फलतः कर्मार्थकम् । कर्म(१)त्वादिवारणाय—गुणत्वव्याप्येति गुणवृत्त्यर्थकम्(२) । गुणवृत्तीति तु ज्यायः । ज्ञानेतरेति ज्ञानपदं पूर्वोक्ताभिघातान्तोपलक्षकम् । तथा च तादृशस्य स्वनिष्ठगुणत्वव्याप्यजात्यनाश्रयस्य गुणस्य यानि कारणानि (३) तदन्यमात्रवृत्तिः फ-

(१) तथाच—इति (ख) पुस्तकेऽधिकः पाठः ।

(२) गुणत्वाभाववदवृत्त्यर्थकम्—इति (ख) पुस्तके ।

(३) यानि यानि कारणानि—इति (क) पुस्तके ।

लतस्तदवृत्तिर्या एकवृत्तिमात्रवृत्तिरनेकवृत्त्यवृत्तिर्गुणत्वव्याप्या गुणत्वसामानाधिकरणा ज्ञातृधर्मेतरभावजनकवृत्तिजातिस्तद्वत्त्वमर्थः । कर्मत्ववारणाय—गुणत्वसमानाधिकरणेति । शेषं पूर्वोक्तदिशावसेयम् ।

मूले—एते विजातीयमेवेति । एवकारेण सजातीयव्यवच्छेदः तथा च सजातीयाजनकत्वे सति भावजनकत्वं पर्यवसितार्थः यद्यपीश्वरेच्छाप्रयत्नाभ्यामस्मदादीच्छाप्रयत्नयोः फलेच्छाद्वेषाभ्यां चोपायेच्छाद्वेषयोर्जननात् क्वचिदिच्छादिना प्रयत्नाजननाच्चाव्याप्तिर्द्वित्वादावतिव्याप्तिश्च, तथापि ज्ञानेतरसविषयाभिन्नजातीयजनकवृत्तिगुणत्वव्याप्यजातिशून्यत्वे सति स्वव्यधिकरणज्ञातृधर्मेतरभावजनकवृत्तिगुणत्वव्याप्यजातिमत्त्वं विवक्षितम् । परत्वादिवारणाय—ज्ञातृधर्मेतरेति । सुखदुःखोपसंग्रहाय—स्वव्यधिकरणेति ज्ञातृधर्मविशेषणम् । इत्थं च । सुखदुःखयोरिच्छाद्वेषाजनकत्वपक्षेऽपि न क्षतिरिति मन्तव्यम् । धर्माधर्मयोः समानाधिकरणधर्माधर्मजनकत्वान्नातिप्रसङ्गः । प्रत्यक्षत्वेन वा जातिर्विशेषणीया ।

प्रकाशे वस्तुत इति । पुत्रसुखस्य पितृपरोक्षत्वादनुमित्यादिरूपमेव ज्ञानं वाच्यं तस्य च विषयाजन्यतया न द्वारतासम्भवः

मूले साक्षाज्जनकत्वं वेति । अव्यवहितपूर्वसत्त्वेन व्यधिकरणमद्वारीकृत्य वा जनकत्वं तत्त्वमित्यर्थः ।

प्रकाशे प्रत्यक्षजननसमकालमिति । ज्ञानयोरेव युगपदुत्पादो नेष्यत इति हृदयम् । सुखाद्यजनकत्वादि-



ति क्वाचित्कपाठस्य सुखं भोग्यं सुखं दुःखं च आदिः कारणं ययोरिच्छाद्वेषयोस्तदजनकत्वादित्यर्थः । अत्रेच्छेत्यादि । युक्तं चैतत् जन्येच्छामात्रे च ज्ञानस्य हेतुत्वात् । तयोर्विषयप्रकारानियमे जनकीभूतज्ञानविषयताप्रकारत्वयोरेव तन्त्रत्वात्। ज्ञानं विना तयोरुत्पादासम्भवात् । वर्तमानसुखदुःखयोरनागतद्वयगोचरेच्छादिजनकत्वे मानाभावाच्च । उत्कृष्टसुखदुःखवतां तत्रोत्कृष्टेच्छाद्वेषावपि तज्ज्ञानाधीनौ सुखादिविलयेऽपि तयोरुत्पत्तेरिति दिक् ॥

अतीन्द्रियेति । अतीन्द्रियमात्रावृत्तित्वम् ऐन्द्रियकवृत्तित्वपर्यवसितम् । गुणशब्दस्य विशेषपरतया गुणत्वं भावनात्वं तद्व्याप्यत्वं तन्न्यूनवृत्तित्वं तत्समानाधिकरणाभावप्रतियोगित्वमिति यावत्(१) । तथा च ऐन्द्रियकवृत्तिज्ञानेतरात्मगुणमात्रवृत्तिजातिमत्त्वम् ऐन्द्रियकवृत्तिज्ञानेतरात्मविशेषगुणवृत्तिभावनानिष्ठाभावप्रतियोगिजातिमत्त्वमिति लक्षणद्वये तात्पर्यम् । ज्ञानान्यात्मगुणमात्रवृत्तियोग्यजातिमत्त्वं ज्ञानसंख्यापरिमाणावृत्तिप्रत्यक्षात्मगुणवृत्तिजातिमत्त्वं वा तत्त्वमिति तु न्यायः । ज्ञानाभिन्न इति । विशेषगुणान्तं तादृशजातीयपरम्, इच्छाप्रयत्नपर्यवसितार्थकम् । सजातीयविजातीययोर्ये कारणे तदुभयवृत्तीत्यर्थः । तेनैकस्याः संख्याव्यक्तेरुभयाजनकत्वेऽपि न क्षतिः । गुणत्वसाक्षाद्व्याप्यजात्या वैजात्यस्य विवक्षितत्वात् । अन्यथा एकस्या

(१) तत्समानाधिकरणाभावप्रतियोगित्वभावनानिष्ठाभावप्रतियोगित्वमिति यावत्—(ख) पुस्तके ।

एव नीलव्यक्तेर्नीलान्तरसहकारेण कदाचिन्नीलस्य पीतसहकारेण कदाचिच्चित्रस्य जननाद्रूपेऽतिप्रसज्येत(१)। जातिपरत्वे चेति। चः समुच्चये। ताभ्यामिति। न च विशेषगुणेति मूल एवाभिधानादप्रसङ्गः। तस्योभयारम्भकातिप्रसङ्गवारणाय विवक्षणीयस्य स्वाश्रयसमवेतमात्रारम्भकत्वस्य परसमवेताद्वित्वादिजनकबुद्धावसत्त्वेन तत्संग्रहार्थमभिमतस्य परसमवेतविशेषगुणानारम्भकत्वार्थकत्वात्। आश्रयसमवेतेऽपि तथा विवक्षणेऽपि संस्कारत्वमादाय तयोरतिप्रसङ्गादिति भावः। अथ वा चस्त्वर्थः। ननु व्यक्तिपरतायामपि तत्रातिव्याप्तिरत आह–ताभ्यामिति। ताभ्यां स्वाश्रयकर्मण एव जननात् न तु विशेषगुणस्येत्यर्थः। स्वव्यधिकरणेति। ज्ञानभिन्नो यः स्वव्यधिकरणो विशेषगुणस्तस्य जनकं यदनित्यं यश्च गुणो गुणविशेषो वेगरूपस्तदुभयावृत्तीति जातिविशेषणम्। शब्दस्य ज्ञानसुखादिजनकत्वात् ज्ञानभिन्नेति ज्ञातृधर्मेतरार्थकम्। शब्दस्य शब्दान्तरजनकत्वात्–स्वव्यधिकरणेति। बुद्धेर्द्वित्वादिजनकत्वात्–विशेषेति। विशेषगुणस्य च कृतिमद्द्वारीकृत्य जनकत्वं वाच्यं तेन ज्ञानेच्छयोः कृतिद्वारा शब्दजनकत्वेऽपि न क्षतिः। कृतेस्तु न कृतिर्द्वारम्। धर्माधर्मौ तु कृतिमद्द्वारीकृत्यापि घनगर्जितादौ जनकौ। बुद्धित्वेच्छात्वयोस्तादृशजनकेश्वरबुद्धीच्छावृत्तित्वात्–अनित्येति। संस्कारत्ववारणाय–वेगावृत्तित्वोपादानम्।

(१) रूपेऽतिप्रसङ्गात्–इति (ख) पुस्तके।



संख्यात्वपरिमाणत्वादिवारणाय–वृत्त्यन्तम्। संख्यादेरपि ज्ञानजनकत्वात्–ज्ञानभिन्नेति। नन्वेवं भावनायामव्याप्तिः। अथ मिथ्याज्ञानवासनाया धर्माधर्मजनकत्वाद्भावनाया अपि पटुतरभावनाजनकत्वस्य भाष्यकृताभिधानात्। ज्ञानपदस्यानुभवपरत्वाद्वा तथेति चेत् तथापि परिमाणाद्यतिव्याप्तिः कामिनीस्तनपरिणाहादेः कामुकसुखादिजनकत्वादारुण्यादेरिव संख्यागुरुत्वपरिमाणानामप्यदृष्टजनकत्वात्। ज्ञानपदेनात्मधर्मोपलक्षणे च सुखाद्यग्रहप्रसङ्गादिति चेत् न। स्वाश्रयसमवेतत्वेन विशेषगुणविशेषणात्। आत्मैकत्वमहत्त्वयोः स्वसामानाधिकरणसाक्षात्कारजनकत्वात्–ज्ञानभिन्नेति। तयोश्च न सुखादिजनकत्वं मानाभावात्। एकत्वादेरपि समानाधिकरणाद्वित्वादिजनकत्वात्–विशेषेति। पाकजजनकतावच्छेदकं तेजःसंयोगगतं ज्ञानसुखादिजनकतावच्छेदकं च। शरीरात्मसंयोगगतम् आत्ममनोयोगगतं च जातिभेदमादायातिप्रसङ्गः। तत्संयोगमात्रस्य तथात्वेऽतिप्रसङ्गः–अतो गुणत्वव्याप्येति। गुणत्वसाक्षाद्व्याप्यार्थकम्। गुणत्वसाक्षाद्व्याप्यत्वं च संस्कारत्वान्यगुणत्वव्याप्यजात्यव्याप्यत्वम्। सुखदुःखयोरिच्छाद्वेषजनकत्वे मानाभावमाशङ्क्याह–यत्नेतरेति। यत्नेतरास्मिन्प्रत्यक्षे वर्तते या गुणत्वव्याप्या जातिस्तद्वद्विभुविशेषगुणत्वमित्यर्थः। यत्नेतरप्रत्यक्षे वा सामानाधिकरण्येन विशेषगुणजात्योर्विशेषणे।

मूले–परिमाणान्ताः परत्रैवेति। ज्ञानाभिघातान्यादि-

ति(१) मध्यम् । जनयन्तीति(२)शेषः ।

प्रकाशे समानाधिकरणेति । शब्दत्वादिवारणाय वृत्त्यन्तम् । ज्ञानाभिघातभिन्नसमानाधिकरणजनकावृत्त्यर्थकम् । भिन्नान्तोपादानात् परिमाणत्वस्पर्शत्वोपग्रहः । परत्वादिवारणाय वृत्त्यन्तम् । परत्वादिनापि सुखादिजनने ज्ञानपदं ज्ञातृधर्मपरम् । परिमाणजनकवृत्तिद्वित्वत्वादिवारणाय व्याप्यान्तम् । समानाधिकरणेति । साजात्यं सत्ताव्याप्यजात्या । पृथिवीत्वादिवारणाय गुणत्वव्याप्येति । वस्तुतो गुणत्वव्याप्यजात्या साजात्यलाभाय तत् । गुरुत्वत्वद्रवत्वत्ववेगत्वस्थितिस्थापकत्ववारणाय कर्मजनकावृत्तीति पूरणीयम् । स्पर्शस्त्वभिघातेनान्यथासिद्धो न कर्मकारणम् । कर्मासमवायिकारणत्वं वा वक्तव्यम् ।

मूले प्रयत्नान्ता एकाश्रितमन्यत्रैवेति । ज्ञानसुखदुःखेतरस्वसमानाधिकरणैकाश्रिताजनकत्वे सत्यनेकवृत्तिवृत्तिगुणनिष्ठाभावप्रतियोगित्वव्याप्यजातिशून्यत्वे च सति ज्ञातृधर्मेतरजनकत्वमर्थः । द्वयमपि जनकत्वं स्वरूपयोग्यता-तेनाजनितपतनादौ जनितावयविगुरुत्वादौ नातिप्रसङ्गः अजनितरूपादौ रूपादौ च नाप्रसङ्गः । लौकिकप्रयत्नो नेच्छाविशेषरूपयागादिजननयोग्य इति हृदयम् । अवयविरूपादिकं प्रति च रूपत्वादिनैव कारणत्वं न त्ववयवरूपत्वादिना गौरवात् ।

(१) भिन्नमिति—इति (ख) पुस्तके ।

(२) आरम्भन्त इति—इति (ख) पुस्तके ।



अवयविनोऽनुत्पाददशायामवयवरूपादीनामिवान्त्यावयविरूपादीनामपि समवायिकारणविरहेणैवाजनकत्वात् । परिमाणपदेन च ह्रस्वत्वाणुत्वभिन्नं जन्यं वा तादृशपरिमाणं ग्राह्यम् । नन्वन्त्यावयविमहत्त्वदीर्घत्वयोरव्याप्तिः । महत्त्वत्वादिना जनकत्वे नित्यस्य गगनमहत्त्वादेः फलोपधानप्रसङ्गात्(१) । जन्यमहत्त्वत्वादिना तथात्वमिति चेत् न नानापदार्थघटितप्रागभावत्वघटिततदपेक्षया द्रव्यवन्महत्त्वत्वस्यैव लघुत्वात् । समवायश्च सम्बन्धविधया स्वरूपेण निविशते न तु समवायत्वेन । स्पर्शवन्महत्त्वत्वमस्तु तथेति चेन्न । नियमेनाजनकाश्रयावृत्तेऽवच्छेदके सम्भवति तत्साधारणस्या(२)लघोस्तथात्वायोगात् । मैवं प्रागभावत्वस्याखण्डोपाधितया तद्घटितस्यैव लघुत्वात् । मूर्त्तत्वादिजातिपक्षे मूर्त्तमहत्त्वत्वादेरेव तथात्वात् । अपेक्षाबुद्धेरपि संस्कारस्वरूपयोग्यत्वं वक्ष्यते । एकाश्रितजनकत्वं वा वक्तव्यम् । संख्यापृथक्त्ववारणाय अनेकेति । अदृष्टजनकप्रयत्नस्यालक्ष्यत्वेनाव्याप्तिं निरस्यति । प्रयत्नशब्देनेति । धारकोऽपि प्रयत्नो जनयत्येव नाडीस्पन्दम् । नो चेज्जननयोग्य एव ग्राह्यः । वस्तुतस्तु प्रथमं जनकत्वं फलोपधानमेव वाच्यं कर्मासमवायिकारणतावच्छेदकरूपशून्यत्वेन(३) विशेषणाच्च गुरुत्वादिनिरासः

(१) फलोपसंग्रहात्—इति (क) पुस्तके ।

(२) तत्साधारण्यस्या—इति (क) पुस्तके ।

(३) कर्मासमवायिकारणत्वेन—इति (ख) पुस्तके ।

शेषे च जनकवृत्तिगुणत्वव्याप्यजातिमत्त्वं वक्तव्यमतो न कश्चिद्दोषः(१) ।

प्रकाशे **स्वसमानाश्रयेति** । विशिष्टजनकावृत्तिर्या ज्ञानेतरस्मिन् एकाश्रिते एकाश्रितमात्रे वर्तते जनकवृत्तिगुणत्वव्याप्या जातिस्तद्वत्त्वमर्थः । शब्दत्वादिवारणायावृत्त्यन्तम् । तत्र स्पर्शत्वस्नेहत्वोपसंग्रहाय एकवृत्तीति । यत्नत्वपरिमाणत्वसंग्रहायानात्मधर्मेति पूरणीयम् । ज्ञानत्वसंख्यात्ववारणाय ज्ञानेतरैकाश्रितमात्रवृत्तीति । जनकत्वं च ज्ञातृधर्मेतरकार्यं प्रति साक्षाज्जनकत्वं वक्तव्यम् । इच्छा च किञ्चिज्जनयित्वैवानात्मधर्मं जनयति । ज्ञानं तु परत्वादिकं यत्नश्च चेष्टां साक्षादेव जनयति । एकत्वत्वादिवारणाय गुणत्वव्याप्येति गुणत्वसाक्षाद्व्याप्यार्थकम् । धर्माधर्मयोश्च परमाण्वादिक्रियासाक्षाज्जनकत्वे धर्मत्वाधर्मत्ववारणाय जातिः प्रत्यक्षत्वेन विशेषणीया । यद्वा ज्ञानेतरसमानाश्रयैकवृत्तिकार्यजनके यत्नभिन्ने न वर्तते ज्ञानादिभिन्नकार्यजनके वर्तते या एकाश्रितमात्रवृत्तिगुणत्वसाक्षाद्व्याप्या जातिस्तद्वत्त्वमित्यर्थः । एतावतैव भाष्यं समञ्जसम् । आचार्यदिशा तु विहितनिषिद्धाविषयत्वेन जातिमद्विशेषणीयम् । वस्तुतस्तु यत्नेतरात्मगुणमात्रवृत्तिजातिशून्यत्वे ज्ञानसुखदुःखेतरस्वसमानाश्रयैकवृत्तिजनकभिन्नत्वे च सति ज्ञानादिभिन्नकार्यजनकवृत्त्येकवृत्तिमात्रवृत्तिगुणत्वसाक्षाद्व्याप्य-

(१) वक्तव्यमित्यदोषः—इति (ख) पुस्तक ।



जातिमत्त्वं वक्तव्यम् ॥ "संयोगाद्योऽधर्मान्तास्तूभयत्रारम्भका"इति भाष्यम् । ज्ञानसंयोगभिन्नसमानाधिकरणजनकवृत्त्यात्मधर्मेतरव्यधिकरणजनकवृत्तिसविषयावृत्तिपृथक्त्ववत्त्वातिरिक्तजातिमद्गुणत्वं तदर्थः । रूपादिवारणायाद्यं वृत्त्यन्तम् । तत्र समानाधिकरणज्ञानसंग्रहाभिघातजनकपरिमाणस्नेहस्पर्शवारणाय भिन्नान्तम् । शब्दवारणाय द्वितीयं वृत्त्यन्तम् । अदृष्टेतरात्मविशेषगुणवारणाय सविषयावृत्तीति । द्रव्यवारणाय गुणेति ।

मूले एकग्रहणमकारणत्वद्योतनाय न तु व्यवच्छेदाय । सामान्यत इति सजातीयमेकाश्रितं च कार्यमपेक्ष्य । परत्रारम्भके पठितः स्नेहः कार्यसामान्यमपेक्ष्य उभयत्रारम्भके निवेशनीय इति नासमञ्जसमिति भावः । एवं च तुल्यन्यायतयाभिघातेन स्पर्शस्याप्युपलक्षणं मन्तव्यम् । इत्थं च समानाधिकरणज्ञानेतरजनकवृत्त्यात्मधर्मेतरव्यधिकरणजनकवृत्तियत्नेतरसविषयावृत्तिजातिमददृष्टाजनकयत्नान्यगुणत्वं लक्षणमिति ।

प्रकाशे—**समानाधिकरणेति** । वृत्त्यन्तद्वयमवृत्त्यन्तमन्यान्तं च जातितिशेषणम् । रूपत्वादिवारणायाद्यं वृत्त्यन्तम् । प्रत्यक्षजनकात्मगुणमहत्त्ववृत्तिपरिमाणत्वादिवारणाय ज्ञानेतरानित्यपदयोर्वैकल्पिकमुपादानम् । शब्दत्वादिवारणाय द्वितीयं वृत्त्यन्तम् । ज्ञानपदं ज्ञातृधर्मपरं जनकत्वं च साक्षाद्बोध्यम् । तेन यत्नादृष्टद्वारा द्वेषस्य व्यधिकरणजनकत्वेऽपि न क्षतिः । ज्ञानत्वानुमितित्वादिवारणाय अवृत्त्यन्तम् । **ईश्वरविशेषगुणेति**

ज्ञानेच्छासामान्यपरम् । एवञ्च साधारणयत्नवारणाय दृष्टाजनक-(१)यत्नान्यत्वे सतीति विशेषणान्तरं देयम् । यत्तु विहितनिषिद्धविषयतज्जातीयावृत्तित्वमर्थं वर्णयित्वा धर्माधर्मजनकतावच्छेदकयत्नत्वावान्तरजातिविशेषाभ्यां लक्षणसमर्थनम् । तन्न । धर्माधर्मोभयजनकयत्नभेदे जातिसङ्करप्रसङ्गेन तादृशजात्यसम्भवात् । भावनाद्विपृथक्त्वादिवारणायान्यान्तम् । (२)द्विपृथक्त्वादिवारणन्तु यथाश्रुतभाष्यानुरोधेन । स्वनिष्ठरूपादेः स्वाश्रयनिष्ठद्वित्वादेश्च जनके वर्तमानस्य घटत्वादेर्वारणाय गुणत्वव्याप्येति गुणत्वाभावासमानाधिकरणार्थकम् । स्पर्शस्यालक्ष्यत्वे तु तदवृत्तित्वमपि जातेर्विशेषणम् । गुरुत्वादीति भाष्ये विशेषपदं संयोगमात्रान्वितार्थकं व्याचक्षाणैराचार्यैः प्रयत्नसामान्यस्य लक्ष्यत्वं दर्शितम् । अभिहितश्चोपलक्षणतया नोदनत्वादिरूपो विशेषः प्रयत्नवदात्मसंयोगादीनामपि क्रियाहेतुत्वात् तत्र च क्रियाहेतुत्वस्याजनकव्यक्तावव्याप्तिमाशङ्क्य तज्जातीयत्वलक्षणमाह—संस्कारस्येति । तदसाधारणकारणत्वं तन्मात्रवृत्तिधर्मावच्छिन्नकार्यताप्रतियोगिककारणताशालित्वम् । अस्ति चेदं धर्माधर्मविशेषाणाम् । क्रियासाधारणकारणमूर्त्तवारणाय(३) गुणत्वव्याप्येति । अथात्र संयोगत्वान्येति व्यर्थम् । सर्वेषामेव संयोगानां कर्मजत्वादिजातियोगित्वात् । संयोगजसंयोगस्यापि कर्मजनकत्वात् । अथ कारणवृत्तित्वं कारणतावच्छेदकत्वं तर्हि संस्कारत्वान्येत्यप्यनर्थकम् । मैवम् । संयोगत्वेन कर्मजनकतावच्छेदकशून्यसंयोगवृत्तेरभिधानात् । प्रयत्नवदात्मसंयोगादौ कर्मजनकतावच्छेदकजातिविरहे तु संयोगत्वान्यत्वमपहाय कर्मजनकतावच्छेदकशून्यसंयोगान्यत्वेन जातिमद्विशेषणीयम् । अवच्छिन्नेति । द्रव्यत्वेन स्वरूपयोग्यत्वे गगनादावपि कर्मप्रसङ्गात् । नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावात् । अभिघातस्यापि तत्र सम्भवाच्चेति भावः । वेगक्रियासमवायिकारणतावच्छेदकत्वेन लाघवान्मूर्त्तत्वं जातिः सिद्ध्यति; भूतत्वं तु न जातिर्मानाभावादिति पुनरेकदेशिनः । शब्दासमवायीति । व्याप्यान्तं जातिविशेषपरिचायकमात्रम् अन्यथा ज्ञानादिजनननियामके आत्ममनःसंयोगादिवृत्तौ निबिडत्वाशिथिलत्वादौ च जातिविशेषेऽतिप्रसङ्गः । यद्वाऽसमवायित्वमविवक्षितम् । तथाच शब्दकारणावृत्तिस्पर्शजन्यवृत्तिसंयोगत्वव्याप्यजातिमत्त्वमित्यर्थः । अभिघातस्येव नोदनस्यापि स्पर्शजन्यत्वात् शब्दासमवायीति । यद्यपि भेर्याकाशसंयोगादिकमपि असमवायिकारणं वक्ष्यति । न च सर्वत्राभिहन्यमानानि द्रव्याणि वेगवन्ति । तथापि तुल्यन्यायतयाऽभिघातकद्रव्याकाशसंयोगस्याप्यसमवायिकारणत्वाददोषः । कार्यतावच्छेदकाननुगमश्चादोषः । मूर्त्तवदमूर्त्तेऽपि स्पर्शादिमत्संयोगस्याभिघातत्वान्नासिद्धिः । न च तद्वृत्त्यन्यतरकर्म-

(१) वारणायादृष्टजनक—इति (क) पुस्तके ।

(२) द्विपृथक्त्वादिवारणं तु यथाश्रुतभाष्यानुरोधेन—इति (ख) पुस्तके नास्ति ।

(३) मूर्त्तजातीयवारणाय—इति (ख) पुस्तके ।

जत्वमादायातिप्रसङ्गः। कारणतावच्छेदकस्याननुगमे तत्त्वा-योगात्। कार्यतावच्छेदकाननुगमस्यादोषत्वात्। उभयकर्मजस्याप्यभिघातस्य शब्दजनकत्वात्। शब्दकारणवृत्तेरन्यतरकर्मजत्वस्य शब्दाकारणावृत्तित्वात्। इहाप्यसमवायित्वमविवक्षितं वैयर्थ्यात्। निश्चलभेर्याकाशसंयोगवारणाय पुनः स्पर्शजन्यत्वं वक्तव्यम्। आन्तरालिकक्षिप्तलोष्टाकाशसंयोगानां शब्दानुपधायकत्वाज्जातिगर्भता। यद्वा शब्दजनकतावच्छेदकसंयोगवृत्तिजातिमत्त्वे तात्पर्यम्। तथा च निमित्तासमवायिसाधारणशब्दजनकतावच्छेदकजातिविरहेऽपि न क्षतिः। मूर्त्तमात्रसंयोगस्याभिघातत्वे तु शब्दस्यासमवायिनि समवायिभिन्ने सामर्थ्यात्तन्मात्रे वर्तते यत् शब्दकारणं तद्वृत्तिसंयोगत्वव्याप्यजातिमत्त्वमित्यर्थः। शब्दसमानाधिकरणवृत्तिसंयोगवृत्तिशब्दजनकतावच्छेदकजातिमत्त्वमिति तु फलितार्थः।

कार्येति। कार्यकारणभावः कार्यत्वं कारणत्वं च। तन्निरूपकत्वम् एकस्याश्रयतया अन्यस्य प्रतियोगित्वेन। तन्निरूपिता तदेकार्थसमवायप्रत्यासत्त्या या कारणता तदाश्रयत्वमित्यर्थः। कारणैकार्थेति। अत्रान्यतरान्तस्य कार्यकारणान्यतरैकार्थसमवाये तात्पर्यम्। कारणं समवायि, तेन पाकजादिजनकौष्ण्यादिव्युदासः। एकैकप्रत्यासत्तेरव्यापकत्वादन्यतरेति। ज्ञानादिवारणायात्मविशेषगुणान्येति कारणविशेषणम्। तदर्थश्चानात्मसमवेतासमवेतधर्मसमवाय्यन्यत्वम्। स्यादेतत् संयोगादयो न कथं विभागाद्यसमवायिकारणानीति। अथ तेऽपि कार्यान्तराणामसमवायिकारणानि। कार्यविशेषासमवायिकारणत्वे तु कारणविशेषान्यत्वं विशेषणमुपादेयमिति चेत्। निमित्तपवनाकाशसंयोगो मनोगगनसंयोगश्च कस्याप्यसमवायिकारणमिति वक्तव्यम्।

अत्राहुः यत्कार्यस्य तादृशप्रत्यासत्त्या यत्र कारणे न तदसमवायिकारणत्वव्यवहारः प्रामाणिकानां तत्कार्यप्रतियोगिकतद्वृत्तिभिन्नत्वेन कारणत्वं विशेषणीयम्, आत्मविशेषगुणेषु न किंचिदपि कार्यं प्रत्यसमवायिकरणत्वव्यवहार इति तदन्यत्वमेवोक्तमिति।

केचित्तु आत्मविशेषगुणान्यत्वे सति तादृशप्रत्यासत्तिगर्भकारणत्वाभावव्याप्यजात्यसमानाधिकरणधर्मसमवायित्वं तत्त्वम्, मनोगगनसंयोगादयोऽपि सामान्यतो भवन्त्येवासमवायिकारणत्वव्यवहारभाजनानि, विशेषे तु पूर्वोक्तैव गतिरित्याहुः। तच्चिन्त्यम्।

ज्ञानादृष्टेति। असमवायिकारणतावच्छेदकरूपमसमवायिकारणवृत्तिगुणत्वव्याप्यजातिः। यथाश्रुते परिमाणत्वाणुत्वत्वादीनामनवच्छेदकत्वादव्याप्तिप्रसङ्गात्। नौकादिगमनविशेषो द्रवद्रव्य एव जायते न तु भूम्यादाविति द्रवत्वस्यापि तत्र हेतुत्वं द्रवत्वान्येति वा वक्तव्यम्। मनोगगनसंयोगविभागानामुक्तैकाश्रितनिमित्तत्वासम्भवात् संयोगविभागान्येत्यपि वक्तव्यम्। यद्वा निमित्तकारणतावच्छेदकं निमित्तकारणवृत्तिः स्पर्शत्वान्यगुणत्वव्याप्यजातिरिति। पाकविशेषे जलादेरेव निमित्तत्वं न तु तत्स्पर्शस्यापि। वला ( यत्रा ? ) द्यात्मधर्मेतरैकाश्रितनिमित्त-

कारणावृत्त्यसमवायिकारणवृत्तिप्रत्यक्षजातिमद्गुणत्वं तत्त्वमिति तु न्यायः । गुरुत्वस्येव वेगस्याप्युत्कर्षादभिघातजन्यक्रियोत्कर्षदर्शनात् तत्रापि क्रियानिमित्तत्वान्नातिप्रसङ्गः । द्रवत्ववारणं पूर्ववत् ।

उष्णत्वव्याप्यानुद्भूतत्वस्य स्थितिस्थापकत्वस्य च वारणाय प्रत्यक्षेति । सर्वत्र पृथक्त्वत्वान्येति वक्तव्यम् । असमवायीति । निमित्तकारणत्वं ज्ञानेतरस्य भावस्य। परत्वादेरपि सुखदुःखजनकत्वे सुखदुःखेतरत्वमपि वक्तव्यम् । द्रव्यवारणाय गुणत्वव्याप्येति गुणानिष्ठार्थकम् । सुखदुःखयोरिच्छाद्वेषजनकत्वे मानाभावमाशङ्क्याह—आकाशेतरेत्यादि । मूले संयोगादिवारणाय निमित्तकारणमेवेति । बुद्ध्यादौ तदभावमाशङ्क्याह—यथा चेति ।

प्रकाशे विशेषणासिद्धिं विशेषणस्य व्यर्थत्वेन तन्निबन्धनामासिद्धिं व्याप्यत्वासिद्धिम् । विभिवाति । स्नेहे व्यभिचारवारणाय मूर्त्तेति स्वरूपकथनम् । कार्यैकार्थप्रत्यासत्त्या बुद्ध्यादेर्जनकत्वं दुर्वारमित्यत आह—प्रागुक्तेति । प्रामाणिकव्यवहारानुरोधेन गुरोरप्यात्मविशेषगुणान्यत्वस्य लक्षणे निवेशात्(१)। पूर्वोक्तेति। अत्रापि कार्यमेकाश्रितत्वेन विशेषणीयम् । तेन संग्रहाभिघातनिमित्तयोः स्नेहानुष्णस्पर्शयोर्व्युदासः। अनुष्णस्पर्शस्य क्रियानिमित्तत्वविरहस्तु कार्यं एकाश्रितत्वविशेषणप्रक्षेपेण निमित्तत्वं वारयतामाचार्याणामेवानुमतः ।

(१) विशेषणात्—इति ( ख ) पुस्तके ।



मूले संग्रहादावित्यतद्गुणसंविज्ञानबहुव्रीहिणा नौकाप्लवनादि(१)परम् । अभिघात इति अभिघातजाक्रियापरमिति केचित् । स्पर्शत्वपदमनुष्णस्पर्शवृत्तिधर्मपरम् । गुणत्वव्याप्येति । गुणपदस्य स्नेहान्यगुणपरत्वात् स्नेहान्यवृत्तिपर्यवसितार्थकम् । वक्ष्यते चाचार्यैरभिघातजाक्रियानिमित्तत्वं स्पर्शस्य । व्यवाच्छिन्नं तु कार्यपदस्य गुणपरतया एकाश्रितगुणनिमित्तत्वम् । तेन न पूर्वापरमूलविरोध इत्यपरे ।

परत्वादीनामकारणत्वमिति भाष्यम् । अकारणत्वं स्वव्यधिकरणज्ञातृधर्मेतरभावाजनक(२)त्वम् । सुखदुःखभावनादिवारणाय स्वव्यधिकरणेति । इदं च व्यक्तिविशेषापेक्षया । तज्जातीयापेक्षत्वे पुनरेकत्वस्य संख्याजनकत्वेन द्वित्वादेः परिमाणजनकत्वेन संख्यायाः समानासमानजातीयारम्भकमध्यपाठो विरुध्येत । अत एव कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्य इत्यत्र व्यक्तय एवाचार्यैः परिगणिताः अन्यथान्त्यावयविरूपान्त्यशब्दोपादानविरोधात् । तत्र परममहत्त्व(३)मात्मपरिमाणाप्रत्यक्षत्वमते । अतीन्द्रियं वा तद्बोध्यम् । सुखादिवारणाय स्वव्यधिकरणत्वेन ज्ञातृधर्मस्या(४)वश्यं विशेषणीयत्वात् । अन्ये पुनरादिपदग्राह्येषु

(१) नौकोपप्लवनादि—इति (ख) पुस्तके ।
(२) भावाजनकगुण—इति ( ख ) पुस्तके ।
(३) परममहत्त्वमपि—इति ( ख ) पुस्तके ।
(४) अवश्यं विशेषणीयत्वात् ज्ञातृधर्मस्य—इति (ख) पुस्तके ।

सुखादिकमप्यन्तर्भावयन्तो नोक्तं निवेशयन्ति विशेषणम् । रूपाजनकं रूपं सजातीयाद्यजनकौ रसगन्धौ स्पर्शपाकजाद्यजनकः स्पर्शः परिमाणाजनकमवयविपरिमाणं परिमाणाजनिकाऽनेकसंख्याऽनेकपृथक्त्वं परत्वापरत्वे द्रव्यशब्दकर्म(१)पाकजसंयोगविभागाजनकः संयोगः शब्दविभागाजनको विभागः.कर्मवेगसंयोगाजनको वेगः विभागाजनकं कर्म । मतभेदेन चैतत् । शब्दाजनकः शब्दः ज्ञानादृष्टभावनानामजनिका भावना । भावनायाश्च भावनाजनकत्वं भाष्यकृदेव वक्ष्यति । ज्ञानाद्यजनकं ज्ञानम् । चकारात् कर्मस्थितिस्थापकाजनकः स्थितिस्थापकः अजनितप्रधानापूर्वाण्यङ्गापूर्वाणि कीर्तनादिविनष्टमदृष्टं ज्ञानाद्यजनकाविच्छाद्वेषौ चेत्याचार्यतात्पर्यमिति यद्यपि तत्त्वम् । तथापि इहादिग्रहणेन त्रित्वात्रिपृथक्त्वादीनामित्याचार्यस्वरसेन परिमाणादीनामलक्ष्यत्वमभिप्रेत्याह—स्वध्वंसेति । स्वव्यधिकरणात्मधर्मपरं ज्ञानपदम् । तादृशाजनकमात्रवृत्तित्वं तादृशजनकवृत्तिभिन्नत्वम् । जनकं च संख्यात्वेन विशेषणीयम् । गुणत्वव्याप्येति गुणनिष्ठाभावप्रतियोग्यर्थकम् । गुणपदं च गुणविशेषैकत्वपरम् । तथा च स्वध्वंसव्यधिकरणात्मधर्मेतरजनकसंख्याभिन्नावृत्त्येकत्वनिष्ठा(२)त्यन्ताभावप्रतियोगिपरिमाणावृत्तिजातिमत्त्वमित्यर्थः । सुखत्वादिवारणाय स्वव्यधिकरणेति । द्वित्वादिपरिग्रहाय संख्याभिन्नेति । एकत्ववारणाय एकत्वेत्यादि ।

(१) द्रव्यकर्मशब्द—इति (ख) पुस्तके ।

(२) निष्ठाभाव—इति (ख) पुस्तके ।



अणुत्वादि(१)वारणाय परिमाणावृत्तीति । आत्मेतरसमवेतजनकसंख्याभिन्नावृत्त्येकत्वावृत्तिघटवृत्तिवृत्तिजातिमत्त्वं वार्थः । अणुत्वह्रस्वत्वसुखत्वादिवारणाय घटवृत्तिवृत्तीति ।

मूले संयोगादीनां प्रदेशवृत्तित्वमिति(२) भाष्यस्थविशेषगुणपदस्य जन्यविशेषगुणपरत्वमभिप्रेत्य । अत एवेश्वरज्ञानादयो नोट्टङ्किताः । प्रदेशवृत्तिवृत्तिवेगावृत्तिजातिमत्त्वं तत्त्वमिति(३) वा विवक्षितम् ।

प्रकाशे—स्वात्यन्ताभावेति । एकदेति पूरणीयम्(४) । यद्यपि दिक्कालयोर्वृत्तिमन्मात्राधिकरणत्वात्तदीयपरिमाणात्यन्ताभावोऽपि तत्र वर्तते तथापि कालादेर्निखिलाभाववत्त्वेऽपि कालो न द्रव्यं न परिमाणादिमान् काले न द्रव्यत्वादिकमित्यादिप्रतीत्यनुदयात्तादृशप्रतीतिनियामकोऽस्त्येवाभावानां विशेषणताविशेषः । स एव चात्र लक्षणघटक इति नातिप्रसङ्गः । भिन्नभिन्नदेशावच्छेदेन भावाभावयोरैकाधिकरण्यमव्याप्यवृत्तित्वम् । परमाणुसंयोगादीनामपि दिग्देशभेदा एवावच्छेदकाः । परिमाणादीनां तु न तथेत्यपि वदन्ति । वैधर्म्यं युगपदुपलम्भानुपलम्भरूपम् । प्रमाणयन्नित्यस्य वा सप्रमाणयन्नित्यर्थः । पक्षधर्मेति । गुणवृत्तित्वं गुणसमवेतत्वम् । यथाकथंचिद्वृत्तेरतिप्रस-

(१) अणुत्वत्वादिवारणाय—इति (ख) पुस्तके ।

(२) प्रादेशवृत्तित्वमिति—इति (ख) पुस्तके ।

(३) तत्त्वमिति—इति नास्ति (ख) पुस्तके ।

(४) पूरणम्—इति (ख) पुस्तके ।

ञ्ञकत्वात्(१) । द्व्यणुकवारणाय गुणेति । मूर्त्तेति । मूर्त्तवृत्ति-मात्रवृत्तीनां सविषयावृत्तीनां वा जातीनां व्याप्याव्याप्यवृत्ति-वृत्तित्वं विरुद्धमित्यर्थः ।

मूलेऽसमवायिकारणेति वृत्तिनियमककारणीभूतसं-योगोपलक्षणम् । यथाश्रुते सुखादीनामणुदेशतापत्तेः ।

प्रकाशे कालनिष्ठेति । संख्यादिवारणाय वृत्त्यन्तं(२) विभुगुणस्य जातिमतो वा विशेषणम् । अत्र च संयोगविभाग-संग्रहाय नित्येति । समवायेन वृत्तिलाभाय गुणेति । अप्रसि-द्धिवारणाय गुणत्वव्याप्येति । रूपादिवारणाय विभुगुणेति । वेगस्थितिस्थापकवारणाय संस्कारत्वान्येति । निखिलालक्ष्यवा-रणाय(३) गुणत्वव्याप्येति । स्वात्यन्तेति । स्वात्यन्ताभावसमा-नाधिकरणावृत्तिजातिमद्गुणत्वमित्यर्थः । प्रदेशेति । निरुक्तप्रदे-शवृत्तिभिन्नगुणत्वमित्यर्थः । यावद्द्रव्यभावित्वं द्रव्यं स्वाश्रयो भावः स्थितिः । तथा च यावत्स्वाश्रयकालवृत्तित्वमायातं तच्चाव-यविरूपाद्यव्यापकमतो मूले स्थितिरविनाश इति । तथा च स्वाश्रयाधिकरणक्षणवृत्तिध्वंसाप्रतियोगित्वं प्राप्तं तच्चाश्रयनाश-नष्टपरत्वाद्यतिव्यापकमत आह । स्वाश्रयेति । स्वाश्रयसमानका-लीनध्वंसप्रतियोगिभ्यो भिन्नेष्वेव वर्तते आत्मत्वं मनस्त्वं चातो गुणत्वव्याप्येति । वस्तुतस्तु तन्मात्रवृत्तित्वमिह तदन्यावृत्तित्व-

(१) रतिप्रसक्तत्वात्—इति (ख) पुस्तके ।

(२) शून्यान्तं—इति (ख) पुस्तके ।

(३) निखिलालक्ष्यजातिमद्वारणाय—इति (ख) पुस्तके



मेवोपादेयं शेषवैयर्थ्यात् । तथा च स्वाश्रयाधिकरणक्षणवृत्ति-ध्वंसप्रतियोग्यवृत्तिधर्मसमवायिगुणत्वमिति पर्यवसितोऽर्थः । अत्र च सिद्धान्तबलसिद्धौ निखिलपार्थिवरूपस्पर्शव्यावृत्तौ सलिलपवनरूपस्पर्शगतौ जातिभेदौ यावालम्ब्याचार्यीयं विशे-षगुणलक्षणं समर्थयन्ति । अवयवितत्तज्जातीयरूपादौ तत्तज्जा-तीयरूपादिजन्यतावच्छेदका जातिभेदाः । जन्यद्रव्यादिविशेषित-तत्तज्जातीयरूपत्वादीनां तथात्वे गौरवात् । तेन लक्षणसमन्वयः । पाकजान्यत्वे सति पाकजेतरस्वाश्रयवृत्तिध्वंसप्रतियोग्यवृत्तिजातिम-द्गुणत्वं वा तत्त्वम् । तेन तत्तज्जात्यनभ्युपगमेऽपि न क्षतिः । तूलकादे-रिव तेजसोऽपि परिमाणस्यावयवसंयोगजन्यत्वे समानाधिकरण-पाकजान्यत्वे सतीति वक्तव्यम् । वस्तुतस्तु जन्याश्रयनिष्ठध्वंसप्र-तियोगिवृत्तिगुणत्वव्याप्यव्याप्यजातिशून्यत्वे मूर्त्तगुणजातीयत्वे च सत्याश्रयनिष्ठध्वंसाप्रतियोगित्वं तत्त्वम् । एकत्वैकपृथक्त्वस्थिति-स्थापकसंग्रहाय द्वितीयं व्याप्यपदम् । परत्वापरत्वयोरुत्कर्षापक-र्षरूपा तादृशी जातिः । गुणविभाजकोपाधिव्याप्यत्वं वा वक्त-व्यम् । अवयविनो रूपादिवद्द्रवत्वस्याप्याश्रयनाशादेव नाशः । ईश्वरबुद्ध्यादेः संग्राह्यत्वे तु मूर्त्तगुणजातीयत्वं नोपादेयं देयं तु विशेष्ये गुणत्वम् । बुद्ध्यादीनां प्रागनुक्तत्वात् शेषशब्दाभिधान-योग्यानामीश्वरबुद्ध्यादीनामयावद्द्रव्यभावित्वस्य स्वाश्रयसमान-कालीनध्वंसप्रतियोगित्वस्यासंभवात् ।

शेषशब्दस्योक्तान्यकार्यपरत्वमभिप्रेत्योक्तं मूले व्यापक-कार्यविशेषगुणानामिति । इत्थमप्याश्रयनाशनष्टपरत्वाद्य-

व्याप्तिरत आह । **पूर्वनिरुक्तेति** । गुणत्वं जन्यगुणत्वम् । ईश्वरबुद्ध्यादेः संग्राह्यत्वे जन्यत्वं नोपादेयं सांसिद्धिकद्रवत्वादीनां मूर्त्तविशेषगुणत्वमिति यथाश्रुतमेव मूलं साधीयः । **मूर्त्तीति** । द्रवत्वत्वान्यत्वेन जातिर्विशेषणीया । तेन नैमित्तिकद्रवत्वव्युदासः । मूर्त्तिव्याप्यतावच्छेदकजातिमद्विशेषगुणत्वे तात्पर्यमिति काश्चित् । **स्पर्शेति** । स्पर्शस्यालक्ष्यत्वे सामानाधिकरण्यं भेदगर्भं बोध्यम् । गुणत्वसाक्षाद्व्याप्यत्वं संस्कारत्वान्यगुणविभाजकोपाध्यव्याप्यत्वे सति गुणवृत्तित्वम् । तेन न स्थितिस्थापकाव्याप्तिर्न वा कालिकपरत्वादावतिव्याप्तिरिति । **जलवृत्तीति** । पृथिवीरसादिव्यावृत्तजलरसादिवृत्तिजात्यभ्युपगमे गुणत्वव्याप्यत्वं गुणत्वसाक्षाद्व्याप्यत्वम् । तच्चेह स्पर्शत्वद्रवत्वत्वान्यगुणत्वव्याप्यजात्यव्याप्यत्वे सति गुणवृत्तित्वम् । गुणेति करकात्वादिवारणाय(१) ।

मूले तेजोमात्रवृत्तित्वं तेजोविशेषगुणत्वमित्यर्थः । **प्रकाशे** । **जलावनिवृत्तिवृत्तीति** । जलवृत्तिवृत्त्यवनिवृत्तिवृत्तीत्यर्थः । पतनत्वसंग्रहत्ववारणाय गुणत्वव्याप्येति गुणत्वसाक्षाद्व्याप्यार्थकम् । **पृथिवीति** । इक्षुक्षीरादिमाधुर्यवैलक्षण्यवारणाय गुणत्वव्याप्येति गुणत्वव्याप्यजातिसाक्षाद्व्याप्यार्थकम् । तत्तु गुणत्वव्याप्यरसत्वव्याप्यमधुरत्वव्याप्यम् । सुरभित्वादिकमादाय गन्धसंग्रहः । कार्यविशेषजनकतावच्छेदिका पृथिव्याः कर्मजसंयोगजसंयोगयोः कर्मजविभागजविभागयोश्च जातिरेवैका

(१) करत्वादिव्युदासाय—इति (ख) पुस्तके ।



कर्मजत्वादिकं तु भिन्नम्(१) । अन्यथा जातिसङ्करप्रसङ्गात् । कार्यतावच्छेदकनानात्वस्यादोषत्वात् । अतस्तथाविधसंयोगविभागवारणाय विशेषगुणेति । स्पर्शत्वसाक्षाद्व्याप्यजातिविशेषशालिपृथिवीस्पर्शवारणाय स्पर्शान्यत्वं वक्तव्यम् । संयोगादिगतताद्दशजात्यनभ्युपगमे तु गुणविशेषवचनात् विशेषगुणपदादेव तल्लाभः । पृथिवीपवनस्पर्शसाधारणस्पर्शत्वव्याप्यजात्यभ्युपगमे तु तन्नोपादेयम् । पृथिवीतरवृत्त्यवृत्तिरूपत्वरसत्वान्यगुणत्वव्याप्यजात्यव्याप्यजातिमद्गुणत्वमिति तु ज्यायः । अग्रे रूपद्रवत्वयोरित्यादौ तत्र च पृथिव्यादित्रयभिन्नवृत्त्यवृत्तिपृथिवीवृत्तिवृत्तितेजोवृत्तिवृत्तिजातिमद्गुणत्वमर्थः । गुणेति स्पन्दवारणाय । पृथिवीवृत्तिवृत्तितेजोवृत्तिवृत्तिवायुवृत्त्यवृत्तिजातिमद्गुणत्वमिति तु निष्कर्षः । **तेजःसंयोगेति** । एकपदं मात्रार्थकम् । यथाश्रुते पाकजवृत्तिरूपत्वादिकमादायातिप्रसञ्जकत्वात्(२) । चक्षुरादिसंयोगजन्यमात्रवृत्तिचाक्षुषत्वसुखदुःख(३)विशेषत्ववारणायासमवायीति । तैजसघटाकाशसंयोगजशब्दविशेषत्ववारणाय गुणवृत्तीति । गुणपदं शब्दान्यपरम् । सुवर्णत्वादिवारणाय गुणत्वव्याप्येति गुणत्वाव्यभिचार्यर्थकम् । तेजःसंयोगासमवायिकारणकमात्रवृत्तिशब्दावृत्तिजातिमद्गुणत्वमिति फलितार्थः । अवयविद्रवत्वन्तु न लक्ष्यम् ।

(१) भिन्नभिन्नम्—इति (क) पुस्तके ।
(२) अतिप्रसक्तत्वात्—इति (ख) पुस्तके ।
(३) दुःख—इति ( ख ) पुस्तके नास्ति ।

मूले नैमित्तिकपदं तेजःसंयोगजन्यार्थकम् । पाकज-
त्वस्य पाकाधीनजन्मनो लक्षणत्वे द्वितीयादिक्षणेऽव्याप्ति-
र्जातेर्लक्षणत्वेन निरस्तेत्याह । नापीति । विनश्यदवस्थेति
स्वरूपकथनं स्पष्टार्थकम् । केचित्तु तादृशमात्रवृत्तित्वोपादानात्
रूपत्वादिकमादाय विनश्यदवस्थाया विनाशप्रतियोगिन्या अवय-
विरूपाया रूपादौ नाव्याप्तिर्नातिव्याप्तिरित्यर्थः ।

मूले—संख्येति । संख्यापरिमाणपदे अनेकसंख्यामहत्त्व-
समानाधिकरणजन्यपरिमाणपरे प्रचयपदं वा संयोगमात्रपरम् ।
तथा च परिमाणासमवायिकारणतावच्छेदकरूपवत्त्वं परिमाणा-
समवायिकारणवृत्तिगुणत्वव्याप्यजातिमत्त्वं वार्थः । यथाश्रुतं
मूलमनुरुध्याह । परिमाणेति । परिमाणजननायोग्यसंयोग-
वारणाय संयोगत्वान्येति । परिमाणजनकतावच्छेदकसंयो-
गवृत्तिधर्मान्यार्थकम् । तेन न कर्मजत्वादिकमादायातिप्रसङ्गः ।
परिमाणासमवायिकारणवृत्तिपरिमाणजननयोग्य(१) संयोगावृ-
त्तिजातिमत्त्वमिति तु फलितार्थः । कर्मजत्वादेरन्यान्यत्वे यथा-
श्रुतमेव साधीयः । शब्देति । शब्दासमवायिकारणवृत्तिगुण-
त्वव्याप्यजातिमत्त्वमित्यर्थः । अभिघातेति । असाधारण-
निमित्तेति बोध्यम् । संस्कारत्वान्यत्वेन जातिर्विशेषणीया । अने-
केति । समवायेनानेकाश्रितत्वलाभाय गुणेति । गुणत्वव्या-
प्येति गुणत्वव्याप्यव्याप्यार्थकम् । तेन संख्यात्वपृथक्त्वव्युदा-
सः । दिक्कालेति । विशेषगुणशून्यमहत्त्वेन द्वयोरनुगमः । अस-

(१) जननायोग्य—इति ख पुस्तके ।



मवायीति सम्पातायातम् । दिक्कालसंयोगस्य कार्यान्तरनिमित्त-
कारणत्वे मानाभावात् तत्र तत्र विहिततत्तद्दिक्संयोगस्यादृष्टनि-
मित्तत्वात्तदुपादानमिति केचित् । क्षणिकत्वापत्तेरिति । श-
ब्दजशब्दमात्रस्य पूर्वशब्दनाश्यत्वे तस्यान्त्यशब्दमात्रस्य तथा-
त्वे तु तस्यैव क्षणिकत्वापत्तिः । अन्यथेति । आद्यादिना
शब्देन द्वितीयादीनां नाशादित्यपि द्रष्टव्यम् । अत्राद्यस्य कार्ये-
णान्त्यस्य कारणनाशेन मध्यानां तु प्रत्येकावधृतशक्तिकाभ्या-
मुभाभ्यां विनाश इति संप्रदायः । कारणनाशादेव सर्वेषां नाशः।
अन्त्यस्य प्रदेशान्तरे तदुत्तरभाविना शब्देन नाशस्य शक्योप-
पादनत्वेऽपि चरमस्य विना कारणनाशं नाशस्य दुरुपपादत्वात् ।
आद्यस्य पवनसंयोगादिनाशादेव नाशः । इत्थञ्च शब्दोत्पत्ति-
पवनक्रियानाशौ ततः क्रमेण पवनक्रियान्तरविभागसंयोगनाश-
शब्दनाशा इति शब्दस्य क्षणचतुष्टयावस्थायितया कत्वादिवि-
शिष्टज्ञानं सूपपादमिति पुनरेकदेशिनः । मूर्त्तेति । मूर्त्तमिह स्प-
र्शवत् । गुणत्वव्याप्यजातीति च गुणविभाजकोपाधिपरम् । तेन
परत्वापरत्वमात्रे कालिकपरत्वापरत्वयोर्वा नाव्याप्तिः न वा संयो-
गान्यपदवैयर्थ्यम् । मात्रान्तेन विशेषगुणो विवक्षितः । तथा च
जात्यन्तं (१)यथाश्रुतमेवेति कश्चित् । अथात्र यथाश्रुते स्वाश्रय-
नाशैकनाश्यपरत्वाद्यव्याप्तिः जातीयत्वोक्तौ(२) च एकत्वैकपृथ-
क्त्वज्ञानान्तरेष्वतिव्याप्तिः । मैवम् । विरोधिगुणानाश्यत्वे सति

(१) सत्यन्तं—इति (ख) पुस्तके ।

(२) तज्जातीयत्वोक्तौ—इति (ख) पुस्तके ।

नाश्यत्वे च सति निरुक्तनाश्यवृत्तिगुणत्वव्याप्यव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । परत्वादौ च तारतम्यमेव तादृशी जातिर्गुणविभाजकोपाधिव्याप्या जातिर्वा वक्तव्या । चरमशरीराद्येकत्वादीनां च निमित्तनाशजन्यपरमाणुद्वयसंयोगनाशाधीनावयवसंयोगनाशजनितावयविनाशादेव नाशः । भावनाया अपि मोक्षात् पूर्वसत्त्वे मूले ज्ञानपदं विषयिधर्मपरं जन्यात्मधर्मपरं वा । चरमत्वं च विरोधिगुणानाश्यत्वमिति । मूले तदन्येषां कारणनाशानाश्यजन्यगुणानां, कार्यगुणानां कार्यवृत्तिगुणानां, स्वाश्रयसमकालध्वंसप्रतियोगिभिन्नानां, स्वसमानकालीनध्वंसप्रतियोगिवृत्तिगुणानामिति तु फलितार्थः । आश्रयनाशनाश्यत्वं स्वाश्रयनाशनाश्यगुणत्वम् ।

प्रकाशे स्थितिस्थापकादेरित्यादिपदात् गुरुत्वपरिग्रहः(१) । पार्थिवपरमाणुगुरुत्वस्थितिस्थापकयोर्नित्यत्वादकार्यत्वाच्च स्नेहसांसिद्धिकद्रवत्ववतोः पार्थिवत्वाभावात् स्पर्शपर्यन्तमेव परमाणोरपार्थिवत्वं विविक्षितमिति भावः । स्नेहपर्यन्तमिति पाठे तु विविक्षितं विवक्षितार्थाविरोधि गुरुत्वस्थितिस्थापकयोस्तु परमाणौ तदन्वयो विवक्षितस्य पार्थिवपरमाणुनिष्ठयोर्गुरुत्वस्थितिस्थापकयोर्नित्यत्वस्याकार्यत्वस्य विरोधीत्यर्थः । उत्तरत्र स्नेहादुत्तरत्र गुरुत्वे स्थितिस्थापके च ।

मूले गुरुत्वस्नेहेति पाठे उत्तरत्र पूर्वत्र चेति बोध्यम् । पार्थिवपरमाणुगुरुत्वस्यापि पाकजत्वं पुनरेकदेशिनां संमतम् ।

(१) पूर्वपठितगुरुत्वपरिग्रहः—इति (ख) पुस्तके ।



एतदन्येति । एतदा तदप्रतियोगिमात्रपरामर्शः । तथा च तत्प्रतियोगिगुणत्वं पर्यवसितमिति । परत्वेति । द्रवत्वं नैमित्तिकद्रवत्वं विभुवृत्तिवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यत्वे सति सामान्यगुणत्वम् । अतीन्द्रियेति । विशेष्यत इति विशेषः । तथा चातीन्द्रियविशेषो वेगावृत्तिप्रत्यक्षवृत्तिजातिशून्यो (१)य आत्मगुणस्तत्त्वमित्यर्थः । यद्वा अतीन्द्रियत्वम् अतीन्द्रियजातिमत्त्वम् । परार्द्धत्वस्यातीन्द्रियत्वाद्विशेषेति । जीवनयोनियत्नवारणाय यत्नान्यत्वं वक्तव्यमिति । अनुद्भूतत्वमादाय रूपादावतिव्याप्तेरात्मपदमिति । संज्ञात्रैविध्यमेव मूलस्वरससिद्धम् । तत्राधुनिकसङ्केतशालिनी पारिभाषिकी । यथा चैत्रादिः । उपाधिप्रवृत्तिनिमित्तिका चौपाधिकी । यथाकाशपशुभूतादिः । जातिप्रवृत्तिनिमित्तिका च नैमित्तिकी । यथा गवादिः । प्रवृत्तिनिमित्तं च शक्यतावच्छेदकम् । आधुनिकसङ्केतस्तु न शक्तिरिति चैत्रत्वादिकं न तथा । भाष्यकारः पुनराकाशादिसंज्ञामपि पारिभाषिकीं प्राह तदनुरोधेन त्वनुगतोपाधिप्रवृत्तिनिमित्तकसंज्ञात्वमेवौपाधिकत्वम् अनुगतप्रवृत्तिनिमित्तशून्यसंज्ञात्वं च पारिभाषिकत्वं वाच्यम् । व्युत्पादयिष्यते चानुपदमेव शब्दादेः प्रवृत्तिनिमित्तत्वम् । संज्ञा च सङ्केतवत्प्रातिपदिकं शतृशानजाद्यन्तेषु धातुप्रत्यययोश्च संज्ञाव्यवहारविरहात् । कर्तृकरणादिशब्दास्तु सङ्केतवन्त एव । पाचकपाठकादयस्तु सङ्केतशून्यत्वान्न संज्ञा । तेषामपि संज्ञात्वे तु प्रवृत्तिनिमित्तशून्यसङ्केतवत्त्वम् अनुगतप्रवृत्तिनिमित्तशून्यसङ्केतव-

(१) प्रत्यक्षजातिशून्यो—इति (ख) पुस्तके ।

त्वं वा पारिभाषिकत्वम् । सङ्केतशून्यत्वे सति यौगिकसंज्ञात्वमौ-
पाधिकत्वम् । तेन पङ्कजादिव्युदासः । उपधेयसाङ्कर्यस्यादोषत्वात्
पङ्कजादिवारणाय सत्यन्तमनुपादेयमेव वा । सप्रवृत्तिनिमित्तक-
संज्ञात्वमनुगतप्रवृत्तिनिमित्तकसंज्ञात्वं वा नैमित्तिकत्वं वाच्यम् ।
इदं पुनरत्रावधेयम् । संयुज्यते विभज्यते विभजनं द्रवति
स्पृशति स्निग्धं बुध्यते इच्छति द्वेष्टि यतते इत्यादौ धातो-
रेव संयोगादिप्रतीतेर्न कृदन्तसमुदायस्य तत्र शक्तिः । इयांस्तु
विशेषः । क्वचित्केवलादेव धातोस्तत्प्रतीतिः क्वचिच्चोपसर्गसंदा-
नेनेति । पृथक्त्वपरत्वापरत्वगुरुत्वेषु च समभिव्याहृतपृथगादि-
प्रकृत्यर्थतावच्छेदकानेव तद्गुणान् प्रकृत्यर्थधर्मान् भावप्रत्ययः
प्रत्याययतीति। प्रतीतिस्तु धर्मत्वेन ताद्रूप्येण वेत्यन्यदेतत् । पर-
त्वमपरत्वं च तत्तज्जातिविशिष्टमेव प्रवृत्तिनिमित्तम् । न तु वि-
भाजकोपाधिविशिष्टम् अतिगौरवात् । तथा च परापरौ नाना-
र्थावेव । संख्यायते परिमीयतेऽनेनेति व्युत्पत्तिमात्रं जातिविशेष-
विशिष्टे च रूढिः । इतरथा तु संख्यापरिमाणयोरपि त्रिगति-
रेव । शास्त्रकारीयसङ्केतोपगमादिना संयोगादीनां संज्ञात्वोपपाद-
नेऽपि न नैमित्तिकत्वनिर्वाहः । एकव्यक्तिमात्रबोधिका संज्ञा
पारिभाषिकी । उपाधिपुरस्कारेण उपाधिमात्रपुरस्कारेण वा-
ऽनेकव्यक्तिबोधिका च औपाधिकी । जातिपुरस्कारेण बोधिका
च नैमित्तिकी । संयोगादीनामपि नैमित्तिकत्वमित्यपि केचित् ।
वाच्यं सदित्यादि । अत्र वाच्यत्वं शक्तिविषयत्वमात्रं न तु
शक्तिविशेष्यत्वम् असम्भवात् । दधिसुवर्णादिपदे दध्यादेर्वारणाय



वाच्योपस्थापकमिति। तदर्थश्च प्रकृतशब्दजन्यप्रतीतिप्रकारत्वम् ।
वाच्यवृत्तित्वं साक्षाच्छक्तिविशेष्यत्वम्(१)। तेनाकृतेरुपाधिघटक-
धर्मस्य च व्युदासः । आकृतिमत्त्वं तु न शक्यम् । तथा च न्या-
यसूत्रं "जात्याकृतिव्यक्तयस्तु पदार्थः" इति । विशिष्टस्य शक्यत्वे
विशेषणसम्बन्धोऽपि शक्य इति चेत्तथापि नासौ शक्योपस्थि-
तिप्रकारः । न तु शक्यान्तर्भूतमिति । अत्रेदं तत्त्वम् । यदुभय-
रूपविशिष्टयोः सम्बन्धो गृहीतस्तत्रैकरूपविशिष्टैकतरज्ञानाद्रूपा-
न्तरविशिष्टापरोपस्थितिः यथा हस्तिहस्तिपकादौ । पदपदार्थ-
योरपीयमेव मर्यादा । येन च रूपेण पदादुपस्थितिः शाब्दबो-
धोऽपि तेनैव । न च स्मरणं निर्विकल्पकम् । न च निर्विकल्प-
कोपस्थितस्य शब्दानुप्रवेशः । आकाङ्क्षादिज्ञानविरहात् । शक्तिग्र-
हे पदार्थोपस्थितौ च प्रकारस्याशक्यत्वे गोत्वादेरपि तथात्वप्रसङ्गः।
अशक्येनापि शक्यानुगमसंभवात् । विशिष्टे तु शक्तिग्रहो नेहापि
वारयितुं शक्यः । नियतोपस्थितिविरहात् । शब्दाश्रयत्वस्य न
तथात्वं कदाचिदष्टद्रव्यातिरिक्तद्रव्यत्वेनाप्युपस्थितेरिति चेत् व्यु-
त्पत्तिवैचित्र्यात् कस्यचिद्द्रवयत्वेन कस्यचिद्द्रोसद्दशत्वेनोपस्थिता-
वपि लाघवाद्द्रवयत्वविशिष्टमेव शक्यमिति यथावधार्यते तथेहाप्य-
वधार्यताम् । गोत्वादिवच्च शब्द एव शक्यतावच्छेदकः । तद्वत्त्वन्तु
संसर्गमर्यादया लभ्यम् । विनिगमनाविरहेण ककारगकारादीनां
सर्वेषामेव शक्यतावच्छेदकत्वे तेषामनुगमकं शब्दत्वमास्थीयते ।
अन्यथा शक्त्यानन्त्यप्रसङ्गादिति । भावत्वेन गुणत्वेन । तेन त्रस-

(१) साक्षाच्छक्तिविशेष्यवृत्तित्वं—इति (ख) पुस्तके ।

रेणोस्तत्संख्यायाश्च तेषां गुणबहिर्भूताया व्युदासः । अतएवाग्रे त्रसरेणुं तत्संख्यां च विहाय संयोगादावित्युक्तम् । तत्रादिपदात् परिमाणपरिग्रहः । विशेषणेऽपीति । अभावस्य तदैन्द्रियकत्वस्य वानभ्युगमेऽपीत्यर्थः ।

चक्षुर्मात्रेति । त्वगग्राह्यं चक्षुर्ग्राह्यं ग्राह्यान्तार्थः । त्रसरेणुगते तु स्नेहद्रवत्वे न प्रत्यक्षे इति(१) हृदयम् । स्नेहद्रवत्वान्यचक्षुर्ग्राह्यविशेषगुणत्वं वा विवक्षितम् । अत एव दैवात् त्वगगृहीतस्नेहादिव्यक्तौ नातिव्याप्तिः ।

**रसनादीति** । चक्षुरग्राह्यरसनग्राह्यधर्मवद्गुणत्वं रसत्वम् ।

चक्षुरग्राह्यघ्राणग्राह्यधर्मवद्गुणत्वं च गन्धत्वम् । स च धर्मो मधुरत्वसुरभित्वादिरखण्डोपाधिरूपः । गुणत्वमप्यखण्डोपाधिः । सर्वेन्द्रियवेद्यमिह ग्राह्यान्तम्(२) । रसगन्धवद्द्रव्यवारणाय गुणेति । स्नेहद्रवत्वावृत्तित्वग्ग्राह्यधर्मवाद्विशेषगुणत्वम् ।

चक्षुरग्राह्यत्वग्ग्राह्यधर्मवद्गुणत्वं वा स्पर्शत्वम् । स च धर्मः शीतत्वादिः । नीलपीतादिवच्छीतादेरप्येकैकत्वोपगमे तु चक्षुर्ग्रहणायोग्यत्वग्ग्राह्यगुणत्वं तत्त्वं वाच्यम् । श्रोत्रग्राह्यगुणत्वं च शब्दत्वम् शब्दगतसंख्यावारणाय गुणेति । इदं त्ववधेयम् । मधुरत्वादिवद्रसत्वादीनामप्यखण्डोपाधित्वे न क्षतिः । मधुरादिसौरभादिषु रसाद्याकारानुगतमतेरनुभवसिद्धत्वात् । एवं चाक्षुषादिप्रत्यक्षनियामकतया लाघवेन रूपत्वादेरपि सिद्धत्वादिति । तथा च

(१) इति तु—इति (ख) पुस्तके ।

(२) सर्वेन्द्रियवेद्यमित्यग्राह्यान्तम्—इति (ख) पुस्तके ।



मधुरादिरिव रसादिरपि संज्ञाऽखण्डोपाधिनिमित्तिकैवेति । परापरेति । तेषां जातेराकृतिव्यङ्ग्यत्वनियमादिति तु तत्त्वम् । रूपादिधीः रूपत्वादिविशिष्टधीः । तत्तद्ग्राह्यत्वाच्चेति । त्वग्व्यावृत्तचक्षुर्ग्राह्यत्वेन नीलादीनां स्पर्शव्यावृत्तिः स्पर्शव्यावृत्तनीलादिधीकरणत्वेन चक्षुषस्त्वग्व्यावृत्तिरित्यन्योन्याश्रय इत्यर्थः । प्रत्यक्षत्वप्रसङ्गादित्यस्य चक्षुषस्तत्संनिकर्षेण तद्रूपस्य चेत्यादिः । नयनादेर्नीरूपत्वोपगमे तु नायं दोषः । अनुपलब्धोपलभ्यमानत्वोपलब्धानुपलभ्यमानत्वरूपादुत्पन्नविनष्टसाधर्म्यात्तद्भेदाग्रहमात्रमित्यत आह—न चायमिति । भ्रमोऽसंसर्गाग्रहमात्रम् । समवायाविषया समवायस्य तदुभयग्राहिणी । श्याममित्यादि । समवायस्यातीन्द्रियत्वेन तद्विनाशप्रत्यक्षानुपपत्तेश्चेत्यपि द्रष्टव्यम् । रूपाकारा रूपशब्दोल्लेखिनी । वर्णाकारा वर्णशब्दोल्लेखिनी । चक्षुर्मात्रेति । तेजोविशेषगतप्रभात्ववारणाय गुणत्वव्याप्येति गुणवृत्त्यर्थकम् । गुणोऽत्र परिमाणभिन्नो ग्राह्यः तेन चक्षुर्मात्रवेद्यत्रसरेणुपरिमाणमात्रवृत्तिजातिभेदव्युदासः । साक्षाद्व्याप्यत्वं तु न वाच्यम् उत्तरग्रन्थ(१)विरोधात् । चक्षुर्मात्रग्राह्यधर्मसमवायिपरिमाणान्यगुणत्वं तु ज्यायः । स्पर्शद्रवत्वयोरिति । स्पर्शस्यैवकारेण व्यवच्छेदाद् द्रवत्वाभिधानम् । पृथिव्यादीति । विशेषेति पृथिवीतेजोऽन्यतरगुणान्वितम् । गुणत्वव्याप्येति । गुणपदं स्पर्शपरम् । तद्व्याप्यत्वं च तत्समानाधिकरणाभावप्रतियोगित्वम् । स्पर्शवृत्तीति तु फलितार्थः ।

(१) इतरग्रन्थ—इति (क) पुस्तके ।

तथा च वायुवृत्त्यवृत्तिस्पर्शावृत्तित्वयोर्वैकल्पिकमुपादानम्। तथा च पृथिवीविशेषगुणवृत्तिस्तेजोवृत्तिवृत्तिर्वायुवृत्त्यवृत्तिस्पर्शावृत्तिर्वा(१) या जातिस्तद्वत्त्वम्। तेजोविशेषगुणवृत्तिजलवृत्तिवृत्तिवायुवृत्त्यवृत्तिजातिमत्त्वं तेजोविशेषगुणवृत्तिस्पर्शावृत्तिजातिमत्त्वं च लक्षणम्। न कारणत्वं न चाक्षुषप्रत्यक्षमात्रे कारणत्वम्। यत्किंचित्प्रत्यक्षकारणत्वेनैव लक्षणसम्भवादाह—अनुद्भूतेति। उद्भूतरूपवत्त्वस्येति मतुपोऽविवक्षितार्थत्वादुद्भूतरूपत्वस्य कारणतावच्छेदकत्वादित्यर्थः। उद्भूतरूपस्य कारणत्वादिति पाठस्तु सुगम एव। चाक्षुषेति। कारणविशेषगुणशब्दयोर्विशेषपरतया चाक्षुषनिर्विकल्पकविषयपृथिवीविशेषगुणवृत्तिगुणत्वव्याप्यजातिमत्त्वमर्थः। तेनोद्भूतस्पर्शस्य द्रव्यप्रत्यक्षहेतुतामते स्पर्शे धर्माधर्मयोः स्नेहद्रवत्वयोश्च नातिप्रसङ्गः। गन्धादावप्यौपनायिकचाक्षुषज्ञानविषयत्वान्निर्विकल्पकेति। वस्तुतस्तु चाक्षुषप्रत्यक्षं(२)प्रत्येकद्रव्यप्रत्यासत्त्या कारणत्वं विवक्षितम्। तत्र प्रत्यक्षस्य विषयता रूपादेः समवायः प्रत्यासत्तिः। सामान्यलक्षणया नीरूपद्रव्यस्यापि चाक्षुषप्रत्यक्षत्वाज्जन्यतावच्छेदकाविशेषस्फोरणाय निर्विकल्पकेति। गुणत्वव्याप्येति पूर्वोक्तरीत्या स्पर्शावृत्त्यर्थकम् विषयस्थस्यालोकस्थस्य च रूपस्य प्रत्यक्षकारणत्वमाक्षिपति ननु विषयालोकयोरुद्भूतरूपवत्त्वस्येति। समाधत्ते मैवामिति। विषयस्थस्यालोकस्थस्य चोद्भूतरूपस्योत्कर्षादिति।

(१) स्पर्शावृत्तिर्वा—इति (ख) पुस्तके।
(२) चाक्षुषद्रव्यप्रत्यक्षं—इति (ख) पुस्तके।



मूले सगुणानामिति। अत्र स्वतन्त्राः अनुद्भूतरूपादौ मानाभावः द्रव्यत्वस्येव पृथिवीत्वादेरप्यप्रयोजकत्वात्। अत एव वायौ रूपं नास्तीति प्रतीतिः(१) सर्वानुभवसिद्धा लाघवेन रूपस्पर्शयोः प्रत्यक्षत्वप्रयोजकत्वात्। महत्सु चक्षुरादितदवयवेषु तयोः सत्त्वे तेषां तयोश्च प्रत्यक्षत्वापत्तिः। (२)उपस्थिते च त्वक्संनिकृष्टे महति वायाविव तथाविधे चक्षुरादावपि निराबाधैवोष्णस्पर्शसामान्याभावप्रतीतिः। एवं स्पर्शसामान्यस्यापि (३)अनन्तानां चारम्भकतावच्छेदकानामनुद्भूतस्पर्शानां तदप्रत्यक्षत्वप्रयोजकानां च बहूनामनुद्भूतत्वानां कल्पनामपेक्ष्य भूतचतुष्टयवृत्तेरेकस्या जातेरारम्भकतावच्छेदिकायाः कल्पनैव लघीयसीति। अथ सा जातिः पृथिवीत्वादिव्यापिका वक्तव्या अन्यथा सङ्करप्रसङ्गात्। तथाचान्त्यावयविनोऽप्यारम्भकतापत्ति(४)रितिचेत् तवापि न कथम्। तदन्यत्वेन तथात्वादितिचेत् तर्हि तत्त्वमेव प्रतिबन्धकमस्तु। अपि च एकैकान्यत्वस्य तथात्वे मिलितयोर्दण्डघटयोस्तथात्वापत्तिः। तावदन्यत्वेन(५) च तथात्वे तावतामन्योन्याभावानां मिथो विशेषणविशेष्यभावानन्त्यादन-

(१) प्रतीतिः सामान्याभावविषयिणी—इति (ख) पुस्तके।
(२) प्रत्यक्षत्वप्रसङ्गात्—इति (ख) पुस्तके।
(३) स्पर्शसामान्याभावस्यापि—इति (ख) पुस्तके।
(४) तथाचान्त्यावयविनो दण्डादेरारम्भकतापत्ति—इति (ख) पुस्तके।
(५) तावदन्यतरान्यत्वेन—इति (ख) पुस्तके।

न्तकार्यकारणभावप्रसङ्गः । अस्तु वा स्पन्दसमवायिकारणतावच्छेदकत्वेन मूर्त्तत्वं जातिरेव(१) तथा । शेषमुपदर्शितदिशावसेयम् । यत्तु जन्यस्पर्शसमवायिकारणतावच्छेदकत्वेन पार्थिवपरमाणुयावज्जन्यद्रव्यवृत्तिरेका जातिस्तावन्निराबाधं सिध्यति । सा च संकरप्रसङ्गेन जलपरमाण्वादिवृत्तिः । स्वरूपयोग्येऽपि च जलादिपरमाणौ स्पर्शानुत्पत्तिः स्पर्शेन प्रतिबन्धात् असमवायिकारणविरहाच्च सैवारम्भप्रयोजिकेति । तच्चिन्त्यम् । भूतपदं त्वननुगतैः पृथिवीत्वादिभिरनुगतेन वा शब्दासमानाधिकरणनित्यमहत्त्वानाधिकरणमन्योऽन्यद्रव्यत्वादिना पञ्चानां वाचकमिति दिक् । मूले अनित्यता हीति । अनित्यत्वं सत्त्वे सति ध्वंसप्रतियोगित्वम् । सा कार्यता । रूपादीनां परमाणुरूपादीनाम् । आदिग्रहणं रसादेरपि तथात्वसिद्धये । प्रात्यक्षिकीं च विचित्रतायाः सिद्धिमनुरुद्ध्य कार्यद्रव्येष्विति । तथा चापार्थिवपरमाणुरूपेषु न कार्यं परमाणुरूपत्वे सत्यविचित्रत्वाद्व्यतिरेके सुलभो दृष्टान्तः । अविनाशि च सत्त्वे सत्यकार्यत्वात् गगनादिवदिति पर्यवसितार्थः । एवं रसस्पर्शयोरपि बोध्यम् ।

प्रकाशे द्रव्यत्वेति । साक्षादिति भेदेन व्याप्यत्वबोधनाय । द्रव्यत्वव्याप्यजातिसमानाधिकरणगुणमात्रवृत्तिर्द्रव्यत्वव्याप्यतावच्छेदिका या नानाजातिव्यापिका जातिस्तद्वद्गुणत्वमर्थः । वृक्षत्वादिवारणाय गुणपदयोर्वैकल्पिकमुपादानम् । अनुपादानमेव वा । व्यापिकाया विचित्रताया अगुण-

(१) वच्छेदकत्वेन क्लृप्ता जातिर्मूर्त्तत्वमेव—इति (ख) पुस्तके।



वृत्तित्वेऽप्यदोषात् । जलाद्यवयविरूपादौ विचित्रताविरहेऽपि कार्यत्वादाह—पाकजत्वव्यापिकेति । यद्यप्येवं पाकजत्वव्यावृत्त्यापि न कार्यत्वव्यावृत्तिस्तथाप्यसमवायिकारणान्तरविरहिणो भावस्य पाकजत्वव्यतिरेकात्कार्यत्वव्यतिरेक एव सिध्यतीति हृदयम् । रूपादिपाकजत्वव्यापिका चेयम् । तेन सलिलसंयोगस्यापि पाकजत्वेऽपि न क्षतिः । विशेषगुणपाकजत्वाभिप्राये तु द्रव्यविभाजकोपाधिरुपादेयः । तेन शब्दस्य तेजःसंयोगासमवायिकारणकत्वेऽपि न क्षतिः । तत्रापि कत्वाद्यनेकजातिव्यापकस्य गगनत्वव्याप्यतावच्छेदकस्य शब्दत्वस्य सत्त्वात्। नानाजातिश्चोद्भवादिभिन्ना ग्राह्या । तेन सलिलादिरूपादावुद्भवानुद्भवोत्कर्षापकर्षसत्त्वेऽपि न क्षतिः । सलिलादिशुक्लत्वव्यावृत्तो नानाजातिव्यापको जातिविशेषः पृथिवीशुक्लेऽस्तीति मतेनेदम् । तदनभ्युपगमे तु एकजातीयगुणवृत्तिनानाजात्यवच्छिन्नव्याप्यतानिरूपितव्यापकताश्रयद्रव्यविभाजकोपाधिसामानाधिकरण्यं द्रव्यविभाजकयदुपाधिसामानाधिकरण्यत्वेनैकजातीयगुणवृत्तिनानाजातिव्यापकत्वं तदुपाधिसामानाधिकरण्यं वा तत्त्वं वाच्यम् । गुणत्वव्याप्यजात्या एकजातीयत्वस्य लाभाय गुणपदम् । तेन करकात्वसागरत्वाद्यवच्छिन्नव्यापकजलत्वादिसामानाधिकरण्येऽपि जलादिरूपादीनां न दोषः । संयोगगतास्तु जातिभेदा न जलत्वादिसामानाधिकरण्यव्याप्याः । विशेषगुणो वा वक्तव्यः । स्नेहे तूत्कर्षादिरूपा एव जातिभेदाः। नानाजात्यवच्छिन्नरूपादिव्यापकद्रव्यत्वव्याप्यजातिसामानाधि-

करण्यादिकं रूपादिपाकजत्वव्यापकमिति वा वक्तव्यम् । भूतत्वादिति । भूतत्वं बहिरिन्द्रियग्राह्यविशेषगुणजातीयवत्त्वम् प्रकृते च बहिरिन्द्रियत्वं चक्षुष्ट्वम् । भूतपदं वा भूतविशेषरूपवत्परम् । जलपरमाणुरूपं कार्यं रूपत्वादित्यत्रापि पक्षधर्मपरमाणुरूपत्वावच्छिन्नसाध्यव्यापकं पृथिवीरूपत्वमुपाधिः । निमित्तेति । निमित्त(१)गुणपूर्वकत्वस्यासमवायिकारणस्य च निर्गुणत्वेन तद्गुणपूर्वकत्वस्यासंभवित्वेनेत्यर्थः (२) ।

मूले यदि वा रूपमेव पृथिवीत्यादि । रूपं रूपमात्रम् । पयःपावकौ पयःपावकाभिन्नत्वेन भवदभिमते रूपे इति । प्रकाशे भेदाभेद इति । भेदे भेदसम्बन्धे सति अभेदो भेदाभेदः सम्बन्धः प्रतियोगित्वम् अधिकरणत्वं च । आद्ये रूपनिष्ठभेदप्रतियोगिनो घटस्य रूपाभिन्नत्वम् । द्वितीये रूपप्रतियोगिकभेदवतस्तदभाववत्त्वम् । उभयथैव शुक्लः पटः पटस्य शुक्लं रूपमिति प्रतीतेः संभवात् । उभयत्र च सैव प्रमाणम् । द्वितीयस्तु पक्षो न विनान्योन्याभावस्याव्याप्यवृत्तित्वं संभवतीति तत्साधयति । अन्योन्याभावत्वमित्यादि । अभावत्वसाक्षाद्व्याप्यत्वम् अभावविभाजकोपाधित्वम् । अत्र वृत्त्यन्तं नोपादेयम् अव्याप्यवृत्तिध्वंसप्रागभावयोरव्याप्यवृत्तित्वात् ।

(१) निमित्तकारण—इति (ख) पुस्तके ।

(२) वस्तुतस्तु निमित्तासमवायिनोः कार्यगुणासमवायिकारणगुणवत्त्वाभावादित्यर्थः । तेनासमवायिगुणाप्रसिद्ध्यापि न क्षतिः । इति (ख) पुस्तकेऽधिकः पाठः ।



व्याप्यवृत्तेरपि तयोः प्रतियोगिसमवायिनि स्वाभावसादेश्यात् । एककालावच्छेदेन विवक्षायाः प्रकृतानुपयोगात् युगपद्भेदसामानाधिकरण्यप्रतीत्युपपत्तये भेदाभेदयोर्यौगपद्यसाधनाय तदुपादानमित्यपि केचित् । तथा विवक्षणेऽपि वैयर्थ्यापरिहारात् । नित्येति । नित्ययोः समवायस्येत्यर्थः । तथा च श्यामरूपस्य नित्यत्वे परमाणुश्यामरूपसमवायस्यापि नित्यत्वात् श्यामपरमाण्वारब्धद्व्यणुकादौ श्यामत्वमेव स्यान्न तु रक्तत्वादिकम् । अवयविरक्तश्यामत्वयोरवयवरक्तश्यामसमवायाधीनत्वादिति । ईश्वरज्ञानादिनेति । तस्यापि योगिनामीश्वरस्य च प्रत्यक्षत्वात् । अस्मदादीत्यनेन च प्रत्यक्षस्य लौकिकत्वं विवक्षितम् । किञ्चेत्याद्यभ्युच्चयमात्रम् । एकमाश्रयं विना अन्यत्र गृह्यमाणत्वस्य तैरिष्टत्वात् । आश्रयमात्रं विना च न ग्रहणं, जातिवत्तस्याप्याश्रयव्यङ्ग्यत्वात् । मूले रसनेनैवेति । एवकारेण नयनव्यवच्छेदः । यो यज्जातीयः । तथा च रसनग्राह्यचक्षुरग्राह्यधर्मसमवायिगुणत्वमित्यर्थः । गुणेति द्रव्यव्यवच्छेदाय । प्रकाशे रसनेतरेत्यादि । अग्राह्यग्राह्यान्ते(१) जातिविशेषणे । बहिरिन्द्रियग्राह्यं रसनग्राह्यम् । तथाचाग्राह्यग्राह्यान्त(२) गुणत्वव्याप्ययोर्वैकल्पिकोपादानेन लक्षणद्वये तात्पर्यम् । न चान्त्यस्य पूर्वोक्तादभेदः । तत्र रसनग्राह्ये या गुणत्वव्याप्या जातिस्तद्वत्त्वस्योक्तत्वात् । रसने-

(१) अग्राह्यग्राह्यत्वे—इति (क) पुस्तके ।

(२) तथाचाग्राह्यान्त—इति (ख) पुस्तके ।

तरबहिरिन्द्रियाग्राह्ये बहिरिन्द्रियग्राह्ये वर्त्तते या गुणत्वव्याप्या जातिस्तद्वत्त्वं वार्थः । अग्राह्याघटितलक्षणपक्षे एवकारप्रयोजनमाह । एवकारेणेति । अत एवेत्यादि । एवं च मूले प्रमाणपदं सतर्कप्रमाणपरम् । तथापि जलमित्यादि । गृह्यमाणरसं जलं पक्षस्तेन न भागासिद्धिः । जन्यान्तं सजातीयगोचरोपलक्षकम् । साजात्यं च भेदगर्भं विषयतातिरिक्तरूपेण कारणत्वं वा वक्तव्यम् । तेन प्रतिनियतेन्द्रियजन्यत्वस्य बाह्योभयेन्द्रियाजन्यत्वरूपस्य सर्वज्ञानसाधारण्येऽपि रसस्य रसत्वादेः स्वस्य च व्यञ्जकत्वेऽपि न क्षतिः । गुणेति गुणत्वव्याप्यजात्या साजात्यलाभाय । नयनमपि व्यञ्जकरूपवदुपेयते । न च ग्राह्यगुणवत् न वा घटादिकं तादृशरूपादिमत् अतस्तज्जातीयत्वोपादानम् । अत्र च यन्मूर्त्तं सत् प्रतिनियतेन्द्रियग्राह्यगुणग्राहकयद्विशेषगुणवत् तत्तज्जातीयस्य सजातीयसाक्षात्कारकारणस्य ग्राह्यगुणस्य सजातीयवत् यथा रूपव्यञ्जकरूपवानालोकः। जलमपि च मूर्तं प्रतिनियतेन्द्रियग्राह्यगुणग्राहकरसात्मकविशेषगुणवत् तस्मात्सजातीयसाक्षात्कारकारणतज्जातीयग्राह्यगुणजातीयवदिति विवक्षितम् । उपदर्शितव्याप्तिस्फोरणाय साध्ये प्रतिनियतेन्द्रियोपादानं न तु विवक्षितार्थकमेव तत् । ग्रन्थाश्रितादरे(१) तु सजातीयव्यञ्जकालोकरूपजातीयरूपवत्त्वेन सिद्धसाधनं हेतौ ग्राहकान्तवैयर्थ्यं च । प्रतिनियतेन्द्रियग्राह्यत्वं च दर्शनस्पर्शनोभयग्राह्यगुणत्वव्याप्यजातिशून्यत्वं तेनैकेन्द्रियमात्रागृहीतस्नेहादिव्युदासः । स्नेहादेरपि तादृश-

(१) यथाश्रुतादरे—इति—(ख) पुस्तके ।



जातिशून्यस्नेहत्वादिग्राहकत्वादूगुणेति । रसस्यापि स्वात्मकतादृशगुणग्राहकत्वान्नासिद्धिः । रसनरसस्तु न ग्राह्य इति न तस्य रसान्तरव्यञ्जकत्वेन सिद्धसाधनमर्थान्तरं वा । परिमाणस्यापि रूपादिव्यञ्जकत्वाद्विशेषगुणेति । महत्त्वस्य दीर्घत्वव्यञ्जकत्वोपगमे तु तादृशगुणग्राहकद्रव्यवारणाय गुणमात्रमुपादेयम् । यद्वा गुरुत्ववारणाय गुणग्राहकविशेषगुणयोर्वैकल्पिकोपादानं ग्राह्यान्तं च तयोः समानाधिकरणं विशेषणम् । गुणग्राहको ग्राहको गुणः । जात्यादिवारणाय गुणेति । शब्दसुखादेः शब्दसुखाद्यन्तराग्राहकत्वान्मूर्त्तत्वेति । यद्वा साध्ये प्रतिनियतेन्द्रियग्राह्यत्वं स्वविजातीयबहिरिन्द्रियाग्राह्यत्वे सति ग्राह्यत्वम् । स्ववैजात्यं च स्ववृत्तिद्रव्यत्वव्याप्यजातिशून्यत्वम् । रूपादेरालोकादिविजातीयमनःशरीरात्मग्राह्यत्वाद्बाहिरिन्द्रियेति । सजातीयव्यञ्जकमनःसंयोगजातीयसंयोगवत्त्वेन सिद्धसाधनवारणाय ग्राह्येति । यद्यपि स्वसमानजातीयेन्द्रियग्राह्यत्वोक्तावेव सामञ्जस्यम्, इन्द्रियेति स्वसमानजातीयजलीयशरीरग्राह्यालोकरूपजातीयरूपवत्त्वात्सिद्धसाधनस्य वारणाय, तथापि वायुपक्षकस्पर्शजातीयव्यञ्जकत्वसाधनसाधारण्याय वक्रमभिधानम् । अन्यथा वायोः स्वसमानजातीयत्वगिन्द्रियग्राह्यस्य सजातीयव्यञ्जकालोकसंयोगस्य सजातीयवत्त्वात् सिद्धसाधनप्रसङ्गात् । वायोर्वा सजातीयग्राहकग्राह्यविशेषगुणजातीयवत्त्वं साध्यम् । हेतौ च ग्राह्यान्तं पूर्वनिरुक्तार्थकं ग्राहकत्वं च स्वग्राहकत्वं प्रत्यक्षत्वमिति यावत् ।

तथा च तादृशजातिशून्यगुणवन्मूर्त्तत्वात् प्रत्यक्षगुणवन्मूर्त्तत्वात् विशेषगुणवन्मूर्त्तत्वादिति हेतुत्रये तात्पर्यम् । अगृहीतरसगृहीतरूपादिके व्यभिचारवारणाय साध्ये सजातीयत्वोपादानम् । रसः सजातीयसाक्षात्कारकारणग्राह्यजातीयः दर्शनस्पर्शनोभयग्राह्यगुणत्वव्याप्यजातिशून्यमूर्त्तविशेषगुणत्वादिति तु ज्यायः । रीतिरुक्तैवेति । यत्र हीति । चित्ररूपो विजातीयनानारूपवत्समवेत इत्यर्थः । रूपवत्परम्पराश्रितत्वं रूपवति परंपरया आश्रितत्वम् । व्याप्यवृत्तीति । स्वविषयावृत्तीति । स्वविषयावृत्तिजातेर्व्याप्याव्याप्यवृत्तित्वाभावात् । अत एव कर्मापि नाव्याप्यवृत्ति । अवयविन इत्यादि । रूपादीनां व्याप्यवृत्तित्वे रूपस्य सजातीयजनने विजातीयरूपसंवलनमनायत्या प्रतिबन्धकमास्थीयते । रूपजननमात्र एव तथात्वेऽवयविनो नीरूपत्वेनाचाक्षुषत्वप्रसङ्गात् । एतेन स्पर्शौ व्याख्यातः । तत्रापि कठिनत्वसुकुमारत्वादेरनुभवसिद्धत्वात् । न च संयोगभेद एवासौ । चाक्षुषत्वप्रसङ्गात् । रसादिना रसादिजनने एव तु लाघवाद्विजातीयसंवलनम् । न ह्यनुभवसिद्धश्चित्रो रसो न वा द्रव्यं रासनं येनान्यथानुपपत्त्या सोऽपि कल्प्यत इत्यर्थः । अथ नास्त्येव प्रतिबन्धो व्याप्यवृत्तिनावेवावयविनि विजातीयौ रसौ गन्धौ च युगपदुत्पद्येते इति चेन्न । महद्भ्यां तिक्तमधुराभ्यामवयवाभ्यामारब्धस्य तिक्तावयवमात्रावच्छेदेन रसनसंयोगेऽपि माधुर्योपलम्भात् । एतेन गन्धो व्याख्यातः । एकदेशिनस्तु निष्प्रामाणिक एव व्याप्यवृत्तेरुपदर्शिताव्याप्यवृत्तिजातीयताविरोधः । अस्पन्दमानेऽ-



पि मूले बलवता मारुतेन कम्पमाने शाखासमूहे महीरुहोऽपि कम्पते इति प्रत्ययात्। निश्चलबहुतरावयवोपलम्भ(१)दोषवशाच्चैकपर्णादिमात्रकम्पेऽपि न महीरुहश्चलतीति प्रतीतिः । श्यामान्तरावयवे च पक्के घटे रक्तोऽयमिति प्रतीतेर्विना बाधकमप्रमाणीकर्तुमशक्यत्वात् । "लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः" इति स्मरणाच्च । नाप्यतिरिक्तस्य चित्रस्य संभवः नीलस्य नीलेतररूपाजनकत्वात् , अन्यथा नीलात्पीतोत्पादप्रसङ्गात् । रूपत्वेन पार्थिवरूपत्वेन वा चित्ररूपोत्पादकत्वोपगमे तु चित्राचित्रनीलानीलचित्रमात्रावयवारब्धेषु चित्ररूपोत्पादानियामकस्यानुगतानतिप्रसक्तस्य दुर्वचत्वात् । स्वविजातीयरूपसंवलनं तन्नियामकम् । तद्वैजात्यं च चित्रत्वातिरिक्ततद्वृत्तिभिन्नजातिमत्त्वम् । संवलनमपि तत्समवायिसमवेतद्रव्यसमवायिसमवाय इत्यपि केचित् । तच्चिन्त्यम् । एकं चित्रमिति धीरेकं वनमित्यादिवद्विलक्षणसमूहालम्बना । वैलक्षण्यं चात्रैकद्रव्यसमवायः । अवयवसंयोगाभावदशायां द्वाभ्यामिवाश्रयविरहादेवैकेनाप्यनारम्भः । न च विजातीयासंबलितेनेव तत्संबलितेन जनितस्यापि नीलादेर्व्याप्यवृत्तित्वप्रसङ्गः । स्वस्वाश्रयावच्छेदेन सजातीयरूपजननोन्मुखानि रूपाणि अविरोधात् एकमेव सजातीयं रूपं जनयन्ति ज्ञानकारणानीव समूहालम्बनम् । न च तत्र विरोधः। प्रतिबध्नातु वा स्वाश्रयावच्छेदेन विजातीयरूपोत्पादम्। एतेन रसादयो व्याख्याताः। अत एव

(१) उपलम्भाद्दोषविशेषात् एकपल्लवादिकम्पनेऽपि–इति (ख) पुस्तके ।

षड्रसा हरीतकीति निराबाधो व्यवहारः प्रामाणिकानामिति । भाष्ये पाकजोत्पत्तिविधानं पाकजायाः पाकाधीनाया उत्पत्तेर्विधानं प्रकारः । घटादेरिति पार्थिवावयविमात्रपरिग्रहः । अवयविपाकनिरासार्थमामस्वभावत्वप्रतिपादनायामद्रव्यस्येति । तदा तदानीं साक्षात्परंपरया चारम्भकेषु अणुषु परमाणुष्विति ।

मूले प्रकृतपाकापेक्षयेति । तथा च प्रकृतपाकशून्यत्वमामत्वम् । परमाण्वाद्यन्त्यावयविपर्यन्तसाधारणं पार्थिवम् । आदिपदपरिगृहीतसकलपार्थिवान्तर्गतं परमाणुस्वरूपम्(१) अग्निना संयुक्तस्य घटादिपरमाणुपर्यन्तस्य मध्ये घटाद्यारम्भकेषु घटादिद्व्यणुकपर्यन्तारम्भकेषु योग्यताबलात्तदा तावन्मात्रपरामर्षात् । परम्परयेति । त्र्यणुकादिकमधिकृत्य द्व्यणुकनाशानुगुणानि कर्माण्युत्पद्यन्ते । एकस्य द्व्यणुकनाशस्यैकस्मादेव परमाणुसंयोगनाशादुत्पादादुक्तं जात्यभिप्रायमिति । जातिरनुगतो धर्मः ।

विभागेन कर्मणि साध्ये विभुनि व्यभिचारः विभागत्वेन च कर्मजन्यत्वे साध्ये विभागजविभागेऽत उक्तं प्रकाशे विभागाजन्य इति । अवयविरूपादेरित्यादिरित्यस्याविनश्यदवस्थेत्यादिः । तेन यावदाश्रयनाशनाश्यरूपादौ न व्यभिचारः । यद्यपि स्पर्शशून्येन द्रव्यानारम्भात् स्पर्शोत्पादकाले च रूपस्याप्युत्पादान्न पार्थिवावयविनो नीरूपत्वसंभावना तथापि रूपनाशसमये स्पर्शनाशस्यानावश्यकत्वात् नीरूपाभ्यां स्पर्शवद्भ्यां तादृशस्य द्व्यणुकस्य उत्पादे तथाविधेभ्यस्तेभ्यस्तादृशत्रसरेण्वा-

(१) सकलपाककृत पार्थिवपरमाणुरूपम्—इति (क) पुस्तके ।



दिक्रमेणोत्पन्नस्य घटादेर्नीरूपत्वप्रसङ्ग इत्यर्थः(१) । एकस्मादग्निसंयोगात्परम्परया परमाणुक्रियादिक्रमेण द्व्यणुकनाशः अन्यस्माच्च श्यामादिविनाशः अन्यस्माच्च रक्ताद्युत्पाद इति प्रघट्टकार्थः । अत्र वदन्ति । एकस्यैवाग्निसंयोगस्य द्व्यणुकनाशानुगुणक्रियायाः श्यामादिविनाशस्य रक्तादेस्तद्विनाशस्य रक्ताद्यन्तरस्य च हेतुत्वमस्तु विरोधविरहात् । तथाहि अग्निसंयोगाद्यदा परमाणौ क्रिया तदैवाग्निक्रियानाशश्यामनाशौ, अथाग्निक्रियान्तरपरमाणुद्वयविभागरक्तोत्पादाः, अथाग्निपरमाणुविभागपरमाणुद्वयसंयोगनाशरक्तनाशाः, अथाग्निपरमाणुसंयोगनाशद्व्यणुकनाशौ रक्तान्तरं च । पूर्वस्त्वग्निसंयोगो न तन्नाशको नष्टत्वात् । अस्तु चान्त्यशब्दानामिव रूपादीनामपि केषांचित्क्षणिकत्वम् । कार्याव्यवहितपूर्ववर्त्तितामात्रेण संभवत्कारणभावस्यासमवायिकारणस्य नियमेन कार्यकाले सत्त्वं नोपेयते उपेयते तु समवायित्वान्यथानुपपत्त्या समवायिकारणस्य । न चैवमविनश्यदवस्थावयविरूपादीनामवयवरूपादिकालमात्रवृत्तितानियमभङ्गप्रसङ्गः तादृशनियमे मानाभावात् । एकपरमाणुपाके पुनरजागलस्तनायमानो दैववशसंपन्नः कार्यद्रव्यावष्टम्भविरहो न रूपविनाशोत्पादप्रयोजको मानाभावात् । न च सर्वदिगवच्छे-

(१) तथाप्यवयविपाकमालम्ब्य घटादेर्नीरूपत्वप्रसङ्गोऽभिहितः । यद्वा कदाचित्स्पर्शवत्त्वमेव द्रव्यारम्भप्रयोजकमित्यपि कश्चित् । घटादेर्नीरूपत्वप्रसङ्गः सरूपघटानुत्पादप्रसङ्ग इत्यपरे । इति (ख) पुस्तके पाठः ।

देनाग्निसंयोग एव पाकनिमित्तम् । परमाण्वन्तरावष्टब्धे च परमाणौ न तत्संभवो मूर्त्तयोः समानदेशताविरोधादिति वाच्यम् । मानाभावात् । निविडयोरेव च तथा विरोधात् । हस्तसंयुक्ते शिलातलादौ शीतत्वोष्णत्वयोरुपलम्भेनान्तरा तोयतेजसोः सत्त्वोपगमात् । अस्तु वा एकस्मादग्निसंयोगात्परम्परया द्व्यणुकविनाशः अन्यस्माच्च श्यामादिविनाशादिकम् । अस्तु वा वह्निसंयोगस्य पूर्ववर्त्तिनां स्वाजन्यानां वा रूपादीनां नाशकत्वं द्वितीयादेरिव शब्दस्य शब्दान्तराणाम् । अन्यथा तृतीयादिशब्दानां क्षणिकत्वप्रसङ्गात् । अन्त्यस्तु शब्दो नोपान्त्यस्य नाश्योऽपि तु तन्नाशस्य । अधिकमभिहितं प्राक् । एवं च न कस्यापि क्षणिकत्वमिति । यस्य चासमवायिकारणस्य नाशात् कार्यस्य नाशः प्रतिबन्धकाभावविशेषस्यैव तस्यापि कार्यकालसत एव कार्योत्पादकत्वं तेन नैकस्यापि(१) द्रव्यस्य परत्वस्यापरत्वस्य वा क्षणिकत्वमिति । पूर्वोत्तररूपव्यक्त्योरिति । पूर्वव्यक्तेर्नाशक उत्तरव्यक्तेरुत्पादक इत्यर्थः । तदभावः रूपोत्पादस्य रूपनाशकाग्निसंयोगजन्यत्वाभावः । रूपनाशस्य च रूपोत्पादकाग्निसंयोगजन्यत्वाभावः । साध्यविकलत्वान्निश्चितसाध्यवत्त्वाभावात् । श्यामेत्यादि । श्यामाद्युत्पादविनाशयोरपि रूपान्तरनाशकाग्नि(२)संयोगजन्यत्वोपगमात् । अवयविवृत्तित्वमवयविवृत्तिप्रतियोगित्वम् । उत्पद्येतेति । रूपनाशेऽपि

(१) न कस्यापि—इति (क) पुस्तके ।

(२) नाशकोत्पादकाग्नि—इति (क) पुस्तके ।



स्पर्शवत्त्वं यदाकदाचित् स्पर्शवत्त्वं वा आरम्भस्य प्रयोजकमभिप्रेत्य । इत्यत्र इत्यत्र वा । समवायिकारणनाश इति । वस्तुतोऽसमवायिकारणनाश एव द्रव्यनाशको द्व्यणुकादिनाशे क्लृप्तत्वात् । असमवायिकारणत्वं चेह तुरीतन्तुसंयोगादिव्यावृत्तं कार्यसमवायिभिन्नासमवेतत्वे सति समवेतकारणत्वं कारणत्वं वा घटादेर्वास्तवप्रागभावादिनाशत्वाभावात् । कदाचित् कदाचिदेव इत्यादि प्रागुक्तमित्यनेन एतस्यादिना च यत्पूर्वमुक्तं तदाश्रित्य अयमर्थः । अवयविरूपादेः कारणगुणपूर्वकत्वनियमात् अग्निसंयोगस्यावयविनि रूपाद्यजनकत्वात् । यत्र च तस्य न तज्जनकत्वं तत्र तन्नाशकत्वस्याप्यभावान्न तथात्वम् । द्रव्यनाशेत्यादि अवयविरूपेत्यादि द्वयमपि सावधारणम् । यदि स्थूलेऽवयवे रूपादिमत्येव द्रव्यारम्भानुगुणक्रियाया दर्शनात् तथा नियमस्तदा द्रव्यारम्भाननुगुणक्रियाया अपि रूपादिमत्येव दर्शनादवयवक्रियामात्रस्यैव रूपादिमत्युत्पत्तिनियम इति द्रव्यारम्भानुगुणेति विशेषणमयुक्तमित्याशयेनाह प्रकाशकारो(१) द्रव्यारम्भेतीति । यद्यपि स्पर्शवत्त्वस्यारम्भप्रयोजकत्वात्तद्वत्येव द्रव्यस्योत्पाद इति नियमो न तु तदनुगुणक्रियाया अपि स्थूलावयवे(२) तथा दर्शनमात्रस्याकिञ्चित्करत्वात् । तथा च द्व्यणुकानवष्टब्धे(३) परमाणौ पच्यमाने स्पर्शादिरहितेऽपि क्रि-

(१) प्रकाशकारो—इति (ख) पुस्तके नास्ति ।

(२) न्यूनावयवे—इति (क) पुस्तके पाठः ।

(३) तथाच द्यणुका(?) न च पकपरमाणुपाके-इति (ख)पुस्तके ।

याया उत्पादान्न सा रूपादिमत्त्वे मानं तथापि प्रकृते द्व्यणुकनाशस्य द्वितीयक्षणे श्यामादिनाशः तृतीये रक्ताद्युत्पादः । चतुर्थे पञ्चमे वा द्व्यणुकनाशानुगुणक्रियाविनाशात् । पञ्चमे षष्ठे वा द्व्यणुकारम्भानुगुणक्रियोत्पाद इति प्रकृताभिप्रायेणेदमुक्तमित्याह । यद्यपीत्यादिना । स्वोत्तरभाविनमपेक्ष्यैव कारणमात्रविभागस्य विभागजनकत्वमिति सिद्धान्तमनुरुध्याचार्यैरपेक्षणीयभेदेन दशैकादशक्षणप्रक्रियाभिहिता । तमनपेक्ष्यैव यथा संयोगस्य संयोगजनकत्वं कारणाकारणविभागस्य च विभागजनकत्वं तथा कारणमात्रविभागस्यापि । यथा च न तथात्वेऽपि तयोः कर्मत्वं तथैवास्यापीति । स्वतन्त्रमते तु नवक्षणा । कारणमात्रविभागपूर्वकविभागानङ्गीकर्तृमते पुनरष्टक्षणा ।

मूले द्वित्रिचतुःक्षणेति । द्व्यणुकनाशकाले परमाण्वन्तरसंयुक्तेन विनश्यदवस्थश्यामादिशालिना द्वितीयक्षणे द्व्यणुकान्तरस्योत्पादः तृतीये च परमाण्वन्तररूपादिना तत्र रूपादेः । रूपाद्यन्तरसहकृतस्यैव रूपादे रूपादिजनकत्वे तु चतुर्थे । क्षणद्वयं नीरूपादिकमेव तद् द्व्यणुकमिति पुनरुच्छृङ्खलाः । संख्यातामित्यादि । कति भवतः पुत्रा इत्यादिप्रश्ने एको द्वौ त्रयो वेत्युत्तराच्च सामान्यरूपं विना प्रश्नोत्तरयोरयोगादित्यपि वदन्ति । अवधिज्ञानस्येति । वस्तुतोऽधिकापेक्षित्वेऽपि द्विपृथक्त्वस्य द्वित्वसामग्रीजन्यत्वाद् द्वित्वाविशेषत्वापात्तिः । (१)द्वित्वस्यावधिज्ञानविरहापेक्षित्वे तु सत्यवधिज्ञाने द्वित्वप्रत्ययानुप-

(१) द्वित्वविशेषत्वापत्तिः । इति (ख) पुस्तके ।



पत्तिरीश्वरापेक्षाबुद्धितो द्वित्वानुत्पत्तिप्रसङ्गश्चेति । द्वयमेतादित्यादि । एकत्वस्य गुणत्वेऽपि द्वयमिदं नीलमित्यादिवत्त(१)थाप्रतीतिर्दुर्वारेति द्रष्टव्यम् । ननु द्वित्वादिकमपेक्षाबुद्धिजन्यं न च जन्यं गुणादौ वर्त्तितुमीष्टे इत्यस्ति नियामकमित्यत आह । द्वित्वादेस्त्विति । द्वित्वादिकमिति । अत्रापेक्षोपेक्ष्याऽदृष्टाद्वारकजन्यज्ञानजन्यत्वम् अदृष्टाद्वारकज्ञानजन्यत्वं वा साध्यम् । तेन न ज्ञानादौ व्यभिचारः । न वा व्यर्थविशेष्यत्व(२)म् । न तु जन्यज्ञानसाक्षाज्जन्यत्वं स्मृतौ व्यभिचारात् । योग्यमेव च द्वित्वादिकं पक्षः । तेन नांशतो बाधभागासिद्धी । हेतौ च कार्यत्वं भावत्वोपलक्षकम् । तेन नेच्छादिध्वंसे व्यभिचार इति वदन्ति । रूपादिव्यक्तिविशेषवारणाय नियमेनेत्यादि । तदर्थस्तु पुरुषद्वयवेद्यवृत्त्येकत्वावृत्तिधर्मशून्यत्वे सति वेद्यत्वम् । गुरुत्वादिवारणाय विशेष्यम् । एकत्वान्यत्वे सतीति पूरणीयम् । पुरुषद्वयवेद्यावृत्तिधर्मसमवायिवेद्यगुणत्वं हेतूकर्तव्यम् । एकपुरुषमात्रगृहीत(३)घटादिव्यक्तिवारणाय गुणेतीति तु चिन्त्यम् । जन्यत्वे जन्यभावत्वे वा सति पुरुषद्वयग्रहणायोग्यत्वे च सति ग्राह्यत्वादिति वार्थः । आत्मादिवारणायाद्यं सत्यन्तम् । स्वमतेन चेदमनुमानं परस्यासिद्धेरित्याचार्यैरेव वक्ष्यमाणत्वात् । इदं त्ववधातव्यम् । गुणभेदसाधकस्य गुणादिवृत्तित्वस्य बाधिका-

(१) द्वयमिदं रूपवादितिवत्—इति (ख) पुस्तके ।
(२) विशेष्यवैयर्थ्यम्—इति (ख) पुस्तके ।
(३) एकगुणमात्रगृहीत—इति (क) पुस्तके ।

या जन्यतायाः सिद्ध्यैव कृतकृत्यत्वमिति । द्वित्वत्रित्वादेरिति। द्वित्वत्रित्वद्विपृथक्त्वत्रिपृथक्त्वादेरित्यर्थः । एकैकमेव जगति द्वित्वादिकमिति मते दूषणस्याभिधानं तदनधिकरणदेशापर्याप्तवृत्तिकत्वं वा समानदेशत्वं व्याख्याय शेषं वक्ष्यमाणदिशा सङ्गमनीयम् । द्वित्वत्रित्वादीनामिति द्वित्रादीनामित्यर्थः । यद्यपि त्रित्वबुद्धिविषयभिन्नविषयत्वं चतुष्ट्वादिबुद्धेस्तथापि यावत्सु चतुष्ट्वादिबुद्धिस्तावत्सु त्रित्वादिबुद्धेर्वारणं विनातिरिक्तत्रित्वादिकमनुपपन्नमिति भावः । प्रत्येकाविश्रान्तेः प्रत्येकाश्रयाविश्रान्तेः ।

मूले अविरोधादित्यादि । जात्योर्भेदो हि विरोधे सति भवेद्गोत्वाश्वत्ववत् समावेशेऽपि वा परापरभावात् वृक्षत्वशिंशपात्ववत् । न चेह तदुभयसम्भव इत्यर्थः । प्रकारान्तरमाशङ्क्य निराकुरुते । अन्यूनेति । मिथो व्यभिचारश्च सङ्करप्रसङ्गनिरस्तोऽसम्भवी च प्रकृत इति भावः ।

प्रकाशे यदीत्यादि । यदा(१)चाविरोधादित्यस्य विरोधाप्रसङ्गादित्यर्थः(२) । द्रव्यत्वसमानाधिकरणेत्यादि तन्मतेनोपादानम् । स्वमते विपर्ययापर्यवसानात् । आपत्तौ तन्मते दोषमाह यावदिति । सर्वत्र द्रव्ये न प्रतीयेतेति । सत्तया सत्तेत्यापादनान्तरम्(३)। अत्र केचिदाहुः। द्वित्वत्रित्वादिकं तुल्यव्यक्तिवृत्तिकमेव, सामान्यं जातिपदवाच्यं तु भवतु नवेत्यन्यदेतत् । अनित्यस्य संयोगादेरिव नित्यस्यापि द्वित्वादेर्व्यासज्यवृत्तित्वे विरोधाभावात् । भिन्नेन्द्रियग्राह्याणां रूपरसादीनामिव समानेन्द्रियग्राह्याणामपि सत्येकावच्छेदेन समानदेशत्वे प्रतिनियतव्यञ्जकव्यङ्ग्यत्वे विरोधाभावात् । सहचार(१)दर्शनमात्रस्याकिञ्चित्करत्वात् । परस्परादिपदार्थाननुगमाच्च । तुल्यव्यक्तिवृत्तिकत्वेऽपि च भेदे प्रत्ययभेद एव मानम् । अतुल्यव्यक्तिकयोरपि भेदे तस्यैव तन्त्रत्वात् । अन्यथा गोत्वाश्वत्वयोरपि भेदासिद्धावतुल्यव्यक्तिकत्वस्याप्यसिद्धेः । विरुद्धधर्मोऽपि(२) च न्यूनाधिकदेशपर्याप्तवृत्तिकत्वम् । अनुगतसत्ताङ्गीकारे च द्वित्वादिसत्तयोर्व्यासज्यवृत्तिकत्वमपि । परे तु घटपटकुम्भकुशूलेषु प्रति द्विकं त्रिकं द्वित्वत्रित्वप्रतीतावेकतमनाशे तद्वृत्तेर्द्वित्वादेरपि संयोगादेरिव नाशप्रत्ययादनित्यवृत्तिनानाव्यक्तिकमेव द्वित्वादिकम् । स्वाश्रयोत्पादविनाशाभ्यामेव च तस्योत्पादविनाशौ । असमवायिकारणं चाश्रयस्यैकत्वं परिमाणं वा । एकव्यक्तिकमेकत्वमिव तुल्यव्यक्तिवृत्तिकं द्वित्वाद्यपि नानेकम् । तुल्य(३)व्यक्तिवृत्तिकद्वित्वादेः प्रतिबन्धकत्वात् सामग्र्यभेदात् प्रागभावविरहाद्वा न तादृशद्वित्वाद्यन्तरोत्पादः । बुद्धिविशेषस्तु तद्व्यञ्जको न तूत्पादकोऽपेक्षाबुद्धिमते च तच्छून्येनापि ग्रहणप्र-

(१) तदा चाविरोधादित्यस्य—इति (ख) पुस्तके।
(२) अविरोधप्रसङ्गादित्यर्थः—इति (ख) पुस्तके।
(३) सया ? सहेत्यापादनानन्तरम्—इति (ख) पुस्तके ।

(१) भिन्नेन्द्रियग्राह्याणां सहचार—इति (क) पुस्तके।
(२) विरुद्धधर्मेऽपि—इति (क) पुस्तके।
(३) तुल्य—इति (ख) पुस्तके नोपलभ्यते ।

सङ्गात् । तदीयापेक्षाबुद्धिजन्यं तेनैव गृह्यते । स्वीयापेक्षाबुद्धि-
जन्यमेव द्वित्वादिकं स्वयं गृह्णातीति वा स्वभावस्य कल्पने म-
हागौरवापातात् । नानापुरुषीयक्रमिकापेक्षाबुद्धिसमसंख्यतुल्य-
व्यक्तिकद्वित्वादिकल्पनप्रसङ्गाच्च । द्वित्वत्रित्वादीनां च न्यूना-
धिकदेशवृत्तीनां नीलत्वोत्पलत्ववद् घटत्वपाषाणत्वादिवच्च प्र-
तिनियतव्यञ्जकव्यङ्ग्यत्वं नानुपपन्नम् । द्विपृथक्त्वादौ तु गृह्य-
माणे गृह्यत एव द्वित्वादिकम् । वस्तुतः सत्यपि पृथक्त्वे द्विपृ-
थक्त्वादौ प्रमाणाभावः । नित्येषु चैकव्यक्तिकं नानाव्यक्तिक-
मेव वा नित्यम् । अनित्ययोः संयोगयोरिव नित्ययोरपि द्वित्वा-
द्योः समाविष्टयोर्मिथो व्यभिचारे विरोधाभावात् । अस्तु वा
तदप्यनित्यम् । तज्जनकेश्वरज्ञानोपगमेऽप्यवश्यापेक्षणीयतत्तत्स-
हकारिविशेषतद्ध्वंसाभ्यामेव(१)तदुत्पादविनाशनियमः । द्रव्यत्व-
स्य कार्यसामान्यसमवायिकारणतावच्छेदकत्वे द्रव्य एवानि-
त्या सङ्ख्या इतरथा तु गुणादावपि । संख्यायां संख्यान्तराभ्यु-
पगमे त्वनवस्थेति संक्षेपः । अन्ये तु विभिन्नान्येव नित्यानामनि-
त्यानां च नित्यान्येव द्वित्वत्रित्वादीनि । अनुगतव्यवहारस्तु
अनुगतद्वित्वादियोगात् । क्वचिद्विनाशव्यवहारश्चोपलब्धत्वानुप-
लभ्यमानत्वसाधर्म्यात् श्यामादीनामिव न यथार्थः । जातिव्यव-
हारनिमित्तं तु असमवायित्वे(२) सति अनेकसमवेतत्वं समवेत-
त्वं वा आकृतिव्यङ्ग्यत्वमात्रं वेत्याहुः ।

(१) विशेषतन्तुषु समानेषु—इति (क) पुस्तके ।

(२) तादृशद्वित्वादिसमवायित्वे—इति (क) पुस्तके ।



मूले गुणान्तरेभ्यो रूपादिसंयोगादिभ्यः । अत एवाग्रे तत्
पुनरेकद्रव्यमनेकद्रव्यं चेत्यत्र पुनःशब्दः परिमाणमनन्तरो(१)क्तं
व्यवच्छिनत्तीति वक्ष्यति । तत्तात्पर्यं तु व्यवहितोक्तसंख्यामा-
त्रव्यवच्छेदे । रूपादय इत्यत्रादिपदेन संख्यापृथक्त्वसंयोगवि-
भागातिरिक्तगुणमात्रस्य परिग्रहः । संयोगादय इत्यत्र तु वि-
भागस्य । शुद्धस्यैकानेकवृत्तिजातीयत्वस्य पृथक्त्वसाधारण्यं
मूलस्वरससिद्धं व्युत्पाद्य तस्यैव विशिष्टस्य पृथक्त्वव्यावर्तकत्वं
व्युत्पादयति प्रकाशकारः पृथक्त्वेत्यादिना । सलिलमादि-
र्यस्यापार्थिवस्य परमाणोस्तदीयं रूपमादिर्येषां द्व्यणुकादिरूपा-
णामिति तद्गुणसंविज्ञानबहुव्रीहिणाऽपार्थिवरूपमात्रपरिग्रहः ।
अग्रे च मूले सलिलपदमपार्थिवपरमेकदेशोत्कीर्तनं वा । तस्य त-
त्सधर्मणो नित्यद्रव्यस्य । द्व्यणुकादौ कार्यद्रव्ये ।

प्रकाशे **प्रकारवाचीति** । अन्यथा द्वित्वापरिग्रहप्रसङ्गा-
दिति भावः । **स्वव्यापकेति** । स्वविजातीयसंख्याव्याप्यत्वशू-
न्यत्वमित्यर्थः । **समानाधिकरणेति** । समानाधिकरणमिह
नियतं ग्राह्यं तथा च स्वव्याप्यानेकवृत्तियावत्संख्याव्याप्यत्वम् ।
स्वाभावासमानाधिकरणैकत्वान्यसंख्याभावासामानाधिकरण्य-
मिति यावत् । **समानाधिकरणेति** । समानाधिकरणमिह व्या-
पकम् अधिकरणं वा उत्पत्त्यधिकरण(२)क्षणरूपम् । तथा च स्व-
व्यापकयावत्संख्याव्यापकत्वं स्वसमानक्षणोत्पत्तिकयावत्सं-

(१) अनन्तरेणोक्तं—इति (क) पुस्तके ।

(२) उत्पत्त्यनधिकरण—इति (क) पुस्तके ।

ख्याव्यापकत्वं वार्थः । एकद्रव्योत्पादक्षणे च नियमेन द्रव्या-
न्तरविनाशोपगमेनाद्ये तत्र च यावत्त्वमशेषत्वम् । तेन युगपत्तुल्य-
व्यक्तिकपरार्द्धद्वयविरहेऽपि न क्षतिः । द्वयमपि चेदं परार्द्धस्य
स्वाव्यवहितपूर्वक्षणवृत्तियावद्द्रव्यवृत्तित्वनियममतेन । अन्यथा-
पेक्षाबुद्धिवैचित्र्यन्यूनाधिकदेशवृत्तिपरार्द्धद्वयोत्पादे न्यूनवृत्तेरधि-
कदेश(१)व्यापकत्वेनाव्याप्तेः । तादृशव्यापकजातीयत्वं वा वक्त-
व्यम् । सजात्यं च बहुत्वत्वव्याप्यजात्या बोध्यम् । परार्द्धत्वं चेह
तथा एकत्वपदादित्यादिसरूपैकशेषविद्वेषमात्रविजृम्भितम् । व-
स्तुतस्तु अवान्तरलिङ्गसंख्याबोधविरहस्थल एव घटौ घटा इ-
त्यादावेकशेषाभ्युपगमो वैयर्थ्यात् । अवान्तरलिङ्गसंख्याबोधस्य
विनैकशेषमसंभवात् । स्वतन्त्रास्तु कार्यकारणभावनिरूपकसम्ब-
न्धिनः कार्यकारणान्यतरस्य वा एकार्थप्रत्यासत्त्या कारणत्वेना-
त्मान्यसमवेतासमवेतधर्मसमवाय्यन्यत्वादिना विशेषितेन वा तेन
न कारणत्वं मानाभावात् । परन्तु यद्धर्मवन्तमन्तरेण यद्धर्मव-
तो नोत्पत्तिस्तद्धर्मवान् तद्धर्मवतः कारणं कल्प्यते । न च स-
त्यामपेक्षाबुद्धौ सत्स्वाश्रयेषु द्वित्वादीनामेकत्वमन्तरेणानुत्पत्तौ
किंचित् प्रमाणमस्ति । अतो न द्वित्वादिकारणमेकत्वम् । एवमव-
यवैकत्वमपि नावयविनामेकत्वस्य । एतेन पृथक्त्वं व्याख्यातमिति।

मूले द्रव्यान्तरापेक्षयेत्यादि । तथा च तदतद्वृत्त्ये-
कत्वत्रिकादिजनितात्तदतद्वृत्तित्रित्वादिकात्कार्ये त्रित्वादिकमि-
ति न कारणगुणपूर्वकत्वायोगः । तदतद्वृत्त्येकत्वैस्तत्कार्ये त्रि-

(१) अधिकदेशवृत्त्यव्यापकत्वेन-इति (ख) पु० ।



त्वादिकं जननीयमिति भ्रमो न कर्तव्यः । एकत्वस्य द्वित्वादि-
विजातीयत्वात् । अन्यथा कारणयोरेकत्वाभ्यां द्वित्वेन वा
कार्ये द्वित्वाद्युत्पादसंभवादुदासीनैकत्वानुसरणमफलं स्यात् ।
कारणमात्रगुणपूर्वकत्वे कारणाकारणगुणपूर्वकत्वे च कार-
णगुणपूर्वकत्वमक्षतमित्याशङ्कते । कारणाकारणेत्यादि ।
कारणशक्तिवैचित्र्यात् कार्ये वैचित्र्यं स्यादित्यत आह—
किं चेति । तैरित्यादि बहुवचनं द्वित्वादिकमित्यादिपदं चा-
नास्थायाम् । उदासीनैकत्वस्य प्रत्यासत्तिविरहेणैकत्वाजनक-
त्वात् । त्रिभिः परमाणुभिर्द्रव्यानवस्थानात्(१) । अवयवित्रि-
त्वादेश्च कारणगुणपूर्वकत्वात् आन्तरालिकद्व्यणुकानभ्युपग-
न्तृमतेन वा तथाभिधानम् । तथा च ताभ्यां च तैश्च तैरिति यथा-
यथं योजनीयम् । कारणाविशेषममृष्यमाणः शङ्कते । कार्य-
मित्यादि । कारणगतेनैकत्वेन एकत्वे जनयितव्ये कार्य-
द्रव्यमपेक्ष्यते न स्वाश्रयः । स्वाश्रये द्वित्वे तु स्वाश्रयो न
कार्यद्रव्यमिति नाविशेष इत्यर्थः । निराकरोति । न कार्या-
पेक्षयापीति । कार्यकारणद्वित्वे या सामग्री सा कार्यकार-
णत्रित्वेऽपीति । तयोरभेदप्रसङ्गः । त्रित्वेऽतिरिक्तैकत्वतदाश्रया-
पेक्षायामपि द्वित्वसामग्रीप्रभवत्वेन तस्य द्वित्वविशेषत्वापात्तिः ।

पूर्वोक्ते एकद्रव्यं प्रसज्येतेत्यत्र द्वित्वत्रित्वाद्यविशेषप्रसङ्गादौ
च शङ्कते प्रकाशकारो नन्विति । द्वित्वमित्यनेनाश्रयभेदमुपपाद्य

(१) द्रव्यानारम्भात्—इति (ख) पुस्तके ।

कार्यभेदमुपपादयति । प्रागभावेति । एतेन प्रागभावस्यापेक्षणीयत्वेन एकैकस्यैव द्वित्वादेरविरलग्नद्वित्वधारोत्पत्तिरपि नास्ति । ईश्वरीयापेक्षाबुद्धिजन्यतावादिनामिवास्माकमपि कालविशेषादेरपेक्षणीयत्वात् तद्विनाशादेव विनाश इति नाविनाशप्रसङ्गोऽपीति ।

मूले द्वित्वद्विपृथक्त्वादेश्चेति । घटविशेषत्वपाषाणत्वयोर्मूलाग्रावच्छिन्नयोः पुरुषतरुसंयोगयोर्वारणाय समानदेशत्वं समनियतावच्छेदकावच्छेद्यत्वार्थकम् । विभिन्नपुरुषीयद्वित्वादेर्वारणाय समानेन्द्रियग्राह्यत्वम् एकेन्द्रियव्यक्तिवेद्यत्वार्थकम् । द्रव्यावयवबहुत्वयोर्व्यभिचारसंभवे गुणत्वेनाद्रव्यत्वेन वा विशेषणीयम् । व्यञ्जकानियम एकैकमात्रव्यञ्जकव्यङ्ग्यत्वम् । यद्यपि एकपृथक्त्वद्वयज्ञानस्यैकत्वद्वयविषयताध्रौव्येण द्विपृथक्त्वज्ञानस्यापि द्वित्वविषयताध्रौव्यम् । तथापि पृथक्त्वद्वयज्ञानं विना द्विपृक्त्वाग्रहात् तस्यावश्यकत्वेन तादृशसंख्यापृथक्त्वविषयत्वाभ्यां न कार्यकारणभावो मानाभावादिति नाप्रसक्तप्रतिषेधः । एवं च स्नेहद्रवत्वादीनामन्योन्याव्यञ्जकस्वस्वसन्निकर्षव्यङ्ग्यानामेकैकग्रहप्रतिबन्धकदोषविशेषाभावव्यङ्ग्यानां च वारणाय स्वस्वसन्निकर्षेतरभावत्वेन व्यञ्जकं विशेषणीयम् । व्यञ्जकत्वं च व्यक्तिस्वरूपयोग्यता । तेन कदाचिदेकैकमात्रग्रहेऽपि न व्यभिचारः । व्यक्तिश्च लौकिकः साक्षात्कारो विषयजन्यं ज्ञानं वा । एवमेव च वर्णानामपि तथात्वं साधनीयम् परन्तु ते निरुक्तहेतुशालिन एव पक्षीकरणीयाः । यद्वा प्रतिनियतव्यञ्जकव्यङ्ग्यत्व-



मुभयाविषयकलौकिकसाक्षात्कारविषयत्वम् । परस्पराजन्यज्ञानजनकत्वमिति यावत् । एतदभावे च साध्ये मणिकारेणैकावच्छेदेनेत्यादिहेतुरुक्तः । तत्र एकज्ञानजनकयोर्व्यधिकरणरूपाद्योर्मूलाग्राद्यवच्छिन्नयोस्तरुपुरुषसंयोगयोर्नीलत्वोत्पलत्वयोर्घटत्व-(१)पाषाणत्वयोर्जलत्वकरकात्वयोर्द्रव्यावयवत्वसंयोगयोश्च वारणाय सत्यन्तं प्रागुक्तार्थकम् । अवच्छेदकं च देशकालसाधारणं बोध्यम्(२) । रूपरसयोर्वारणाय विशेष्यम् । तदर्थश्च एकबहिरिन्द्रियव्यक्तिग्राह्यत्वं लौकिकैकसाक्षात्कारविषयत्वम् , एकज्ञानजनकत्वमिति यावत् । तेन विभिन्नपुरुषीययोः समनियतद्वित्वयोर्न व्यभिचारः । कदाचित्सम्भवतोश्च समनियतदेशकालयोर्द्रव्यावयवबहुत्वयोरेकज्ञानजनकयोर्निरुक्तसाध्यवत्त्वमपि । पृथक्त्वग्रहे चावश्यं संख्याग्रहः । अभिभवादिदूरत्वसङ्कोचादिवशाद्रूपस्पर्शपरिमाणावान्तरजातय एव गृह्यन्त(३) इति मतेनेदम् । असति प्रतिबन्धक इत्यनेन वा निरुक्तव्यङ्ग्यत्वं विशेषणीयम् । निरुक्तहेतुशालिनोस्तु मिलित्वा प्रत्येकं च ज्ञानजनकत्वमसंभावितमेव । संभाव्यत्वे वा साध्ये हेतौ वा विषयत्वेन जनकत्वं विवक्षणीयम् । इत्थं च एकसाक्षात्कारविषयत्वशालिनामेव तथात्वं साधनीयम् । परेण तेषां परस्परव्यभिचारिव्यञ्जकत्व-

(१) घटविशेषत्व—इति (ख) पुस्तके ।

(२) अवच्छेदकं च देशकालजनकत्वमिति यावत् । तेन विभिन्नपुरुषीययोगसाधारणं बोध्यम्—इति (क) पुस्तके ।

(३) न गृह्यन्ते—इति (ख) पुस्तके ।

ङ्ग्यत्वाभ्युपगमात् । यद्यपि व्याप्यवृत्तेर्देशानवच्छेद्यत्वमते एकदेशावच्छेद्यत्वस्य तरुश्येनचरणसंयोगयोरेकैकमात्रग्रहसम्भवे च समनियतदेशत्वविशेषितस्य हेतुत्वे सर्वं समञ्जसम् । अत एवैकपृथक्त्वरूपस्पर्शपरिमाणस्नेहद्रवत्वानां कदाचिदेकैकमात्रग्रहणसंभवेऽपि न क्षतिः । तथापि परेण शब्दस्यापि व्याप्यवृत्तित्वाभ्युपगमात् पक्षधर्मतासंपत्तये तथाभिधानम् । यदि च व्याप्यवृत्तेर्देश इव नित्यस्य कालोऽपि नावच्छेदको मानाभावात्, एकत्र धर्मिणि भावाभावयोर्विरोधेनैवावच्छेदके भेदाभ्युपगमात्, न च क्वचिदेकस्मिन्नित्यतदभावयोः संभवो नित्यस्य च देशकालविशिष्टप्रतीतिस्तद्वृत्तित्वमवगाहते, तदवच्छिन्नत्वावगाहिनी तु भ्रान्तिरेवेति विभाव्यते । तदा एकावच्छेदेनेत्यस्य नियमेन मिथोऽनवच्छेदकानवच्छेद्यत्वमर्थो वक्तव्यः । तदनवच्छेदकत्वं च स्वानवच्छेद्यतत्कत्वम् । अतो न शब्दावच्छेदकाप्रसिद्धावपि क्षतिः । समनियतकालरूपद्वयादिवारणाय समानदेशत्वम् । यदि च घटत्वादेः संस्थानविशेष इव पाषणत्वादेरपि रूपादिविशेषोऽपि व्यञ्जकोऽग्रहणं च तस्य विनापि दोषं तदग्रहात् तदा समनियतव्यक्तिकत्वं वाच्यम् । सर्वं चेदं समवायेन वृत्तिमधिकृत्य । एकस्मिन्नेव काले गोत्वादितदभावयोर्गवि गवाद्यवच्छेद्यत्वस्यावश्यवक्तव्यत्वादिति । अथ वा एकावच्छेदेनेत्येकक्षणवृत्तित्वपरम् । तेन पिठरपाकवादिमते क्रमिकगन्धाद्योर्निरासः । व्यधिकरणयोस्तयोर्वारणाय समानदेशत्व इति । समानियतव्यक्तिकत्व इत्यर्थः । तेन दूरत्वादिना प्रभात्वस्याग्रहे श्वैत्यस्य इन्द्रनील-



प्रभायां च श्वैत्याग्रहे प्रभात्वस्य ग्रहेऽपि न तयोर्व्यभिचारः । मूलाग्रावच्छिन्नयोः प्रभातरुसंयोगयोरनुद्भूतस्पर्शवृत्त्योः स्पर्शनग्रहणायोग्ययोर्वारणायाव्यासज्यवृत्तित्वमपि वक्तव्यम् । रूपरसाद्योर्ग्रहणायोग्ययोर्वारणायाव्यासज्यवृत्तित्वपि वक्तव्यम् । रूपरसाद्यो रूपादिपरिमाणाद्योः स्नेहादिद्रवत्वाद्योः प्रत्येकं गृह्यमाणयोर्वारणाय समानेति । सामानेन्द्रियग्राह्यत्वं च प्रतिनियतैकैकेन्द्रियग्राह्यत्वं दर्शनस्पर्शनोभयाग्राह्यत्वे सति एकेन्द्रियगाह्यत्वम् । अग्राह्यत्वं च ग्रहणायोग्यत्वमिति संक्षेपः ।

प्रकाशे तुल्यमिति । वस्तुतो विनावधिज्ञानमेकपृथक्त्वस्याग्रहादवधिविशिष्टस्यैव च पृथक्त्वमात्रस्य ग्रहणात् तद्ग्रहेऽवधिज्ञानं कारणमस्तु द्वित्वं तूत्पन्नमात्रं गृह्यत इति न तत्र व्यञ्जकान्तरापेक्षा । स्वीयापेक्षाबुद्धिजन्यमेव च द्वित्वादिकं प्रत्यक्षमिति मूल एवाभिधास्यते । सेनावनादौ च बहुत्वत्वावान्तरजातिविशेषग्रह एवापेक्षाबुद्धिविशेषापेक्षेत्यपीति न काचिदनुपपत्तिरिति । अपेक्षाबुद्धिव्यङ्ग्यम् अपेक्षाबुद्ध्यधीनव्यक्तिकम् । समकालमिति स्थितिकालमधिकृत्य । तथाच द्वित्वगुणज्ञानसमकालमित्यर्थः । क्वाचित्कस्य द्वित्वगुणनाशेनेति पाठस्य कारणे कार्योपचारादपेक्षाबुद्धिनाशेनेत्यर्थः । उपलक्षणं चेदं बुद्धिद्वित्वयोर्भिन्नेन्द्रियवेद्यतया प्रत्यक्षाप्रसरादिति । पौर्वापर्यग्रहस्तु कथंचिदुपनयादिवशात् ।

मूले तेनानुविधीयमानत्वादिति । तेन तत्प्रत्यक्षेण । घटादिव्यञ्जकालोकादिवारणाय व्यञ्जकत्वानुपपत्ताविति ।

प्रकाशे अत उक्तमित्यादि । तथा चाभिव्यक्तावनुविधानं विवक्षितं न तूत्पत्ताविति भावः । प्रतिनियतवेद्यवृत्तिजातिमत्त्वं वा विवक्षितं प्रतिनियतवेद्या या जातिस्तद्वत्त्वं वा । आद्ये पूर्वोपदर्शितजातीये सर्वत्र रूपादौ(१) निर्विकल्पकजीवनयोनियत्नयोश्च व्यभिचारोऽसिद्धिः परस्य, द्वितीये तु स्वतोऽप्यसिद्धिः द्वित्वत्वादेर्नानापुरुषवेद्यत्वोपगमात् इत्यक्षरतात्पर्याभ्यामाह तद्धीत्यादिना । जागराद्येति संपातायातम् । यद्वा नानापुरुषावेद्या वेद्या या व्यक्तिस्तद्वृत्तिजातिमत्त्वं वार्थः । नानापुरुषवेद्यावृत्तिवेद्यजातिमत्त्वं वेति नेयम् । व्यवधानेन व्यवधायकेन । परम्परया इन्द्रियसन्निकर्षस्य प्रतिबन्धात् ।

मूलेऽभिव्यञ्जकत्वमिति । आभिव्यञ्जकत्वसम्भवे उत्पादकत्वे मानाभावात् ।

प्रकाशे पूर्वोत्पन्नेति । युगपद्द्वित्वद्वयानुपलम्भात् । इदं चाभ्युच्चयमात्रम् । द्वित्वादेः समानपुरुषीयाद्वित्वादिप्रतिबन्धकत्वोपगमे द्वित्वान्तरानुत्पत्त्या तथानुपलम्भापत्तिरिति मन्तव्यम् । कार्यद्रव्येत्यादि । अत्र कार्येति द्वित्वकाले विनश्यदवस्थस्य नित्यद्रव्यं च तदानीमविनश्यदवस्थस्योपलक्षकम् । गुणस्येत्यस्य मूलस्थस्येत्यादिः । आश्रयपदेनेत्यादि । तथा च गुणस्य सत इति न विवक्षणीयमिति भावः ।

मूले गुणपदम् असमवायिकारणान्यगुणपर(२)मिति तु

(१) पूर्वोपदर्शितरूपादौ—इति (ख) पुस्तके ।

(२) असमवायिकारणनाशानाश्योपलक्षक—इति । (ख) पुस्तके ।



ज्यायः । प्रत्यक्षं लौकिकप्रत्यक्षम् । मूले धर्मधर्मिभ्यामित्यस्य तदुभयसम्बन्धाच्चेति शेषः ।

प्रकाशे ककारेणेति । ककारपदं विजातीयशब्दपरम् । द्वितीयककार एव कत्वविशिष्टबुद्धौ क्षतिविरहात् । विशेषणवदसतोऽपि विशेष्यस्य कथं विशिष्टज्ञानविषयत्वमिति तु चिन्त्यम् । द्वित्वादिविरोधीति । विरोधो भेदः एवमग्रेऽपि । आम्राणां माधुर्याद्यन्यतमरसवत्त्वनियमादाम्रत्वज्ञानान्माधुर्यादिसंशयवद्बहूनां द्वित्वाद्यन्यतमसंख्यावत्त्वनियमाद्बहुत्वभानाद्द्वित्वादिसंशयो नानुपपन्न इत्यत आह । त्रित्वादाविति । बहुत्वस्येत्यादि । बहुत्वशतत्वपदे जातिविशेषपरे । द्वित्वातिरिक्तेति । द्वित्वातिरिक्तवृत्तीति एकत्वद्वित्वातिरिक्तेति वार्थः । एतादृशोपाध्यनिश्चयेऽपि त्रित्वादिषु बहुत्वव्यवहारादेकत्वत्वादिवद्बहुत्वत्वमपि संख्यात्वव्याप्यजातिविशेषः । तद्व्याप्यं तु त्रित्वत्वादिकमित्यपि केचित् । बहुत्वस्य तत्त्वस्य स्वेन समानजातीयात् (१)स्वाश्रयात् प्रकर्षेण समं सामानाधिकरण्यं न स्यात् । द्वित्वत्वादि(२)वत् संख्यात्ववन्नानाजातिव्यापकत्वात् तथात्वं नानुपपन्नमिति ध्येयम् । ते विशेषणविशेष्यबुद्धी । विशेषणविशेष्ययोर्बुद्धी इत्यर्थेऽसतोऽपि विशेषणस्य विशिष्टबुद्धिं प्रति कारणत्वं नियामकत्वं स्यादनेन निराकृतं न

(१) समानजातीयत्वात्—इति (क) पुस्तके ।

(२) द्विद्वित्वत्वादि—इति (ख) पुस्तके ।

स्यादित्यर्थः । रूपादेरिवैकत्वस्यापि स्वतन्त्रस्य स्मरणमनुभवसिद्धम् । न खलु सुखादिनापि द्रव्यपारतन्त्र्येण तत्स्मर्यते । गन्धत्वादिविशिष्टगन्धादिज्ञानस्येवैकत्वत्वविशिष्टैकत्वज्ञानस्य संस्कारजनकत्वे बाधकाभावाच्च । अनुभवसिद्धा चैकत्वद्रव्यप्रत्ययानन्तरमयमेकोऽयंचैक इति प्रतीतिः । न च क्षणं तदनुत्पादे किञ्चिन्नियामकमस्ति । तथात्वेऽपि चानुव्यवसायः केन वारणीय इत्यरुचेरेकत्वविशिष्टद्रव्यज्ञानमेवापेक्षाबुद्धिमङ्गीकृत्याह । यद्यपीत्यादि । संस्कारजननसमर्थं तज्जनयत् केन वार्यतामत आह । द्वे द्रव्ये इति । सत्यपि विरोधिगुणे ज्ञानाविनाशस्यादृष्टस्यापि फलबलात् क्लृप्तस्यान्यथानुपपत्त्या द्वित्वादिनिर्विकल्पकसामग्र्याः प्रतिबन्धकत्वमास्थीयत इत्यर्थः। एवं च निर्विकल्पकाद्वित्वसविकल्पकद्वित्वविशिष्टद्रव्यज्ञानसाधारणाद्वित्वज्ञानसामग्र्या एव प्रतिबन्धकत्वमास्थातुमुचितं तथा सति हि द्वित्वविशिष्टद्रव्यप्रत्यक्षकालेऽपि द्वित्वस्य सत्त्वं लभ्यते । अत एवाविरलग्नद्वित्वविशिष्टप्रत्यक्षसन्तानोऽपि सूपपदः । प्रकारान्तरेणापि च द्वित्वविशिष्टप्रत्यक्षं सम्भवति । तथा हि अपेक्षाबुद्धिः, अथ द्वित्वम् अपेक्षाबुद्ध्यन्तरं च प्रतिबन्धकविरहात् । ततः पूर्वापेक्षाबुद्धिनाशद्वित्वत्वनिर्विकल्पकद्वित्वान्तराणि । अथोदीच्यद्वित्वे द्वित्वत्वविशिष्टज्ञानं ततो द्वे द्रव्ये इति बुद्धिरिति। अनुमितित्वविशिष्टानुमितिमत्त्वस्य एकमात्रसुखोत्पादे सुखत्वविशिष्टसुखवत्त्वस्येव चोपनयबलादेव द्वित्वत्वविशिष्टद्वित्वविशिष्टप्रत्यक्षम् । स्थूलकालमालम्ब्य च वर्तमानावभास इत्यपि केचि-



त् । द्व्यणुकमित्यादि । आलोकादिसंयोगस्य उद्भूतरूपस्य च विरहेणार्थान्तरवारणाय सत्यन्तविशेषितमुद्भूतरूपवत्वादिति(१) पक्षविशेषणम् । इन्द्रियं चक्षुः । हेतौ(२)चक्षुर्मनोयोगादावितिपूरणीयम् । द्रव्यत्वमविवक्षितम् । अनेकेति । अनेकद्रव्यवत्त्वस्य साम्ये तूलकसुवर्णादौ वैपरीत्येऽपि च महत्त्वोत्कर्षेण प्रत्यक्षोत्कर्षात् । अवयवतदवयवपरम्परासाधारणानेकद्रव्यवत्त्वस्य च दुर्वचत्वात् लाघवाच्च महत्त्वमेव प्रयोजकमिति तु तत्त्वम् । जात्यभावः महत्त्वदीर्घत्वातिरिक्तवृत्तिगुणत्वव्याप्यजातिसामान्याभावः । साक्षात्कारविरोधित्वं तदवच्छेदकत्वं साक्षात्कारविषयवृत्त्यवृत्तित्वमिति यावत् । तेन न परममहत्त्वमात्रस्यातीन्द्रियत्वेनार्थान्तरं सिद्धसाधनं वा । संख्यापृथक्त्वादिषु व्यभिचारवारणाय प्रयोजकान्तम् । साक्षात्कारो द्रव्यस्य । तेन संख्यादेः स्वस्वजातिसाक्षात्कारकारणत्वेऽपि न क्षतिः । प्रयोजकत्वं कारणतावच्छेदकत्वम् । उद्भूतरूपवत्त्वादिना घटादेर्ज्ञानादिमत्त्वेन चात्मनः प्रत्यक्षत्वोपगमादित्यपि केचित् । अदृष्टवारणाय मूर्त्तेति । पिशाचशरीरादिजनकतावच्छेदकसंयोगगतजातिविशेषस्य सत्त्वादेकवृत्तित्वेन विशेषणाद्वा न संयोगे व्यभिचारः । तुल्येति । तावतापि संन्दिग्धोपाधित्वं दुर्वारम् अप्रयोजकं चानुमानम् । यद्यप्यभेदेनान्वयस्यौत्सर्गिकत्वात्सामान्यशब्दस्य समभिव्याहृतविशेषपरत्वं तृणोपलम्भस्थले उपलत्व-

(१) उद्भूतवद्—इति (क) पुस्तके ।

(२) हेतौ च सति— इति (ख) पुस्तके ।

स्य जातिविशेषत्वेनान्वयविरहात् । अन्यथा गोबलीवर्दन्यायेनाविशेषप्रसङ्गात् प्रकृतेऽन्वयसम्भवाच्च । तथाप्यसति तात्पर्यविशेषे(१) सामान्यशब्दस्य वैयर्थ्यप्रसङ्गेन समभिव्याहृतेतरविशेषपरत्वमभिप्रेत्य तन्न्यायो मूलेऽभिहितः ।

मूले विल्वेय इत्यादि । प्रकर्षभावो महत्त्वप्रकर्षसद्भावः । प्रकृष्टं महत्त्वमिति यावत् । तस्याभावः । एवमग्रेऽपि प्रकृष्टदीर्घत्वाभावो बोध्यः । ह्रस्वत्व इत्यस्य च ह्रस्व इत्यर्थः । महत्त्वव्याप्यमेव दीर्घत्वं त्वयोच्यते । महत्त्वविरुद्धं चाणुत्वादिकमसिद्धमतो न साध्याव्यापकत्वम् । परमाण्वादेश्च प्रत्यक्षत्वप्रयोजकमहत्त्ववत्त्वे प्रत्यक्षत्वापत्त्या न साधनव्यापकत्वमित्याह ।

प्रकाशे **महत्त्वेत्यादिनापत्तेरित्यन्तेन** । महत्त्वमेवेत्येवकारेण परिमाणान्तरस्य दीर्घत्वस्य प्रत्यक्षत्वप्रयोजकत्वं व्यवच्छिनत्ति । तच्चाग्रिमे उपयोक्ष्यते । अर्थान्तरमाह । **महत्त्वभिन्नेति** । वस्तुतो महत्त्वसाम्येऽपि दीर्घत्वोत्कर्षेण प्रत्यक्षोत्कर्षात्तदपि(२) तत्प्रयोजकम् । **महत्त्वपरिमाणमिति** । सत्ता गुणत्वान्या च रूपादिसाधारणा जातिरनुपलम्भबाधिता । जातौ गुरुत्वावृत्तित्वं हेतौ च योग्यत्वं विशेषणं देयमिति नार्थान्तरव्यभिचारौ । द्व्यणुकत्वादिसाध्ये नानाजातिव्यापकत्वेन जातिर्विशेषणीया । **दुःखासंभिन्नेत्यादि** । नानाविधिविहितक्रियाजन्यनानाविधस्वर्गवृत्तिसुखत्वव्याप्यैकजातौ मानाभावात्

(१) तथापि सति तात्पर्ये—इति (क) पुस्तके पाठः ।
(२) दीर्घत्वस्योत्कर्षेण प्रत्यक्षस्योत्कर्षात्–इति (क) पु० ।



यथाकथंचिदनुगतरूपमात्रस्य कारणतानवच्छेदकत्वात् शक्त्यानन्त्यप्रसङ्गाच्च दुःखासंभिन्नत्वादिविशिष्ट एव शक्तिरिति टीकाकृतः । सजातीयावधित्वं सजातीयनिष्ठोत्कर्षावधित्वम् । एवमनया दिशा । तत्र सजातीयनिष्ठापकर्षावधित्वं वक्तव्यमित्यर्थः । सङ्कलय्य समुदायार्थमाह । **दीर्घत्वप्रकर्षेत्यादि** । **तुल्यामिति** । वस्तुतस्तेषां व्यक्तिबाहुल्यस्याप्रयोजकत्वे त्रिभिः परैरारब्धात् शतेन तैरारब्धे महत्त्वप्रकर्षो न स्यात् । अस्माकमप्यूनशतेन क्षुद्रैरेकेन महतारब्धात् क्षुद्रैः पञ्चाशता पञ्चाशता च महद्भिरारब्धे । परन्तु समानाधिकरणव्यक्तिबाहुल्यमेवाप्रयोजकमिति मन्तव्यम् । अवयवे परत्वाद्युत्पादस्य संख्योत्पत्तिकाले सम्भवादाह । **पृथक्त्वं चेति** । चकारः परत्वादिसमुच्चये । **अन्यतरेति** । वस्तुतस्तु दैर्घ्येणोपर्यधोभावावस्थितैः समानदीर्घभावैः पञ्चभिरारब्धात्तथाविधैर्दशभिर्दीर्घतरैश्च त्रिचतुरैरारब्धेषु विनापि संयोगभेदगणनां दीर्घतरादिव्यवहारात् संयोगवैजात्यबहुत्वयोरकिञ्चित्करत्वात् परिमाणभेद एव दीर्घत्वम् । एवं महत्त्वमपि नेयम् । **भिन्नमिति** । विजातीयामित्यर्थः । भाट्टास्तु त्रुटावेव विश्रामाद् द्व्यणुकादिकमत्र नास्ति दूरे तद्गताणुत्वह्रस्वत्वे । निराकृतं चानेकद्रव्यवत्त्वस्य प्रत्यक्षप्रयोजकत्वम् । नित्यस्य गगनादिमहत्त्वस्य महत्त्वाजनकत्वं स्पर्शासमानाधिकरणत्वात् समवायिकारणविरहाच्च । अस्तु वा त्रसरेणुगता बहुत्वसंख्यैव परिमाणजनिकेति प्राहुः । द्व्यणुकादिकसत्त्वेऽप्यणुत्वादौ प्रमाणाभावः । द्रव्यत्वस्याप्रयोजकत्वात् । तस्यापरिमिता-

वृत्तित्वासिद्ध्या च तर्कप्रकाशात् । नन्वेवं परममहत्त्वमपि न स्यात् । न स्यादेवेत्यपरे । मूले उपपदेत्यादि । उप समीपवर्ति समभिव्याहृतं यत्पदं तन्निबन्धना विभक्तिरुपपदविभक्तिः । यथा स्पृहधातुयोगे पुत्रेभ्यः स्पृहयतीत्यादौ कर्मणि चतुर्थी । अन्यशब्दस्य शब्दपरत्वे घटात्पटः पृथगित्यादौ पञ्चमी न स्यात् । अर्थपरत्वे तु सूत्रे इतरपदमुपलक्षणत्वसूचनाय । नञर्थेति । यथा चान्योन्याभाव एव नञर्थो न तु तद्विशिष्टं तथोपपादितं नञ्वादे । अघट इत्याद्यभ्युच्चयमात्रम् । अघटं पटमित्यादौ प्रथमाया इव समासे पञ्चम्या अपि लोपे क्षतिविरहात् । तात्पर्यं तु घटात्पटस्य भेद इत्यादौ पञ्चम्यनुपपत्तौ । अत्र वदन्ति । अन्योन्याभाव एव पृथक्त्वम् । प्रामाणिकप्रयोगाधीनं च तत्तच्छब्दप्रयोगे पञ्चम्यनुशासनमन्यथोपपद्यमानं नार्थान्तरसाधकम् । अत एव रूपाद्रसः पृथगित्यादिव्यवहारः प्रामाणिकानाम् । गुणान्तरवत्ताविषयत्वे बाध्यत्वापत्तेः । एकत्वादिवत् परम्परासम्बन्धेन तदपि तत्र वर्तते इति चेत् रूपाद्रूपं पृथगित्यपि व्यवहारापत्तेः । अवधिभेदेन च पृथक्त्वभेदोपगमे एकस्यामेव व्यक्तौ अनन्तकोटिपृथक्त्वकल्पनापत्तेः । अपि च एतदीयं रूपमेतस्मात् पृथगित्यादिव्यवहारानुपपत्तिः । तत्रान्योन्याभावपरत्वं पृथगादेरितिचेत्, सत्यम्, पञ्चमी तु कमर्थमाहेत्यभिधातव्यम् । प्रतियोगित्वमिति चेद् घटान्नेत्यादेरपि प्रसङ्गात् । शब्दविशेषप्रयोग एव पञ्चम्याः प्रतियोगित्वबोधकत्वमिति चेदायातोऽसि मार्गेण । घटात् पूर्व इत्यादौ च पञ्चमी प्रतियोगित्व-



मेवाह पूर्वत्वादेः प्रागभावादिघटितत्वात् । घटात्पटः पृथगित्यादिप्रत्यक्षं घटादेरवधित्वं विषयीकुरुत इति पुनरसिद्धम् । द्विपृथक्त्वं तु सुदूरपराहतं प्रत्येकविश्रान्ताभ्यामेव पृथक्त्वाभ्यां द्वौ पृथगिति बुद्धेरुपपत्तेः । घटौ मिथः पृथगिति बुद्धिर्जायत एव, न जायते तु घटात् पृथगिति । घटावधिकपृथक्त्वस्य घटे विरहादिति ।

मूले एकपरत्वस्य एकतरनिष्ठपरत्वस्य । अन्योन्यापेक्षित्वात् अन्यतरावधिकत्वात् । द्विपरत्वस्य तदन्यापेक्षित्वात् । उभयाभिन्नावधिकत्वादित्यर्थः । कालिकयोः परत्वयोरन्योन्यावधिकत्वाभावात् । दैशिकयोर्विभिन्नदेशस्थोभयापेक्षया मध्यस्थोभयानिष्ठयोस्तत्सम्भवेऽपि ग्रन्थस्य तत्परत्वे तत्रापि एकस्य परत्वादित्याद्यग्रिमग्रन्थासङ्गतेः ।

प्रकाशे अपेक्षाबुद्धेरित्यस्य द्रव्यद्वये समानाधिकरणपृथक्त्वाभ्यां चेत्याद्यन्तौ । सैवेत्यस्य विशेषणविषयतया । तदपीति शेषः । रूपादीति । त्रयोविंशतिपदं यावतामसमवायिकारणत्वसम्भवस्तत्परम् । परत्वादीनामसमवायिकारणत्वबाधाद्विपर्यये न तैरर्थान्तरम् । पूर्वसंयोगाभावः संयोगस्य कारणं न तु सहकारीत्यत आह । समवायिकारणं चेति । यद्वा संयोगपदं द्रव्यपरम् । अभावश्च ध्वंसः । महापटनाशे सत्येवावस्थितसंयोगेभ्यः खण्डपटोत्पत्तेः । अभावानपेक्षत्वं तद्वाच्यमत आह समवायीति । अथ स्वाजनकभावानपेक्षत्वं तद्वाच्यमत आह । तथेति । स्वाजनकेति । स्वजन्यजनकाजनकेति स्वसमानजाती-

याजनकेति स्वनिष्ठजनकतावच्छेदकरूपावच्छिन्नाजनकेति वार्थः। तेन स्वाजनकावयवान्तरापेक्षित्वेऽपि न क्षतिः । स्वविजातीयत्वं स्ववृत्तिगुणत्वव्याप्यजातिशून्यत्वम् ।

मूले एतेन सति संयोगे द्रव्यस्यानपेक्षत्वप्रदर्शनेन। स्वोत्पत्युत्तरेति। यद्यपि पूर्वः पूर्वस्तन्तुसंयोगो नियमेनोत्तरोत्तरभावितन्तुसंयोगान्तरं क्वचिच्च तादृशं तन्त्वन्तरमपेक्षते। तथापि तादृशजातीयत्वं वक्तव्यम् । तादृशश्च अवयवकद्रव्यारम्भकश्चरमो वाऽवयवसंयोगः। इत्थं च भावभूतेत्यपि नोपादेयम् । विपरीतो वेगस्तदभिघाताजनकः । अभिहन्यमानद्रव्यविपरीतवेगोत्कर्षेणाभिघातकद्रव्यविपरीतकर्मोत्कर्षदर्शनात्तस्यापि तद्धेतुत्वमिति हृदयम् । स्वजनकेति । यद्यपीदमभिहन्यमानमात्रकर्मजनकेऽभिघातेऽव्यापकं तथापि तादृशजातीयत्वं वक्तव्यम् । कारणमहत्त्वमिति । विजातीयमपेक्षितमभिप्रेत्य । अपिर्वाध्याहर्तव्यः। संयुक्तेत्यादिसूत्रे अग्नेरौष्ण्यं वैशेषिकम् । रूपादिकं जनयतीति शेषः। इदं त्ववधातव्यम् । द्रव्यारम्भे निरुक्तं निरपेक्षत्वं गुणकर्मारम्भेऽपि तत्र च निरुक्तं सापेक्षत्वं द्रव्यारम्भेऽपि सुलभमिति। एतत्तु वक्तव्यं द्रव्यारम्भे नियमेन विजातीयमूर्तगुणानपेक्षित्वम् । अदृष्टादिव्युदासाय मूर्त्तेति । यदि च द्रव्यविशेषरसादिविशेषोऽपि हेतुस्तदा रसाद्यन्यत्वेन गुणो विशेष्यः । गुणकर्मारम्भे तु तद्विरहः क्वाचित्कतदपेक्षितत्वपर्यवसन्नः । तेन तादृशनिरपेक्षेणावयवसंयोगादिनावयविसंयोगादिजननेऽपि न क्षतिः। परिमाणजनने महत्त्वापेक्षणात् कर्मजनने च नियमेन



वेगापेक्षणादिति । प्रागभावप्रतियोगीत्यादौ सर्वत्र ज्ञानेतरेति सम्बन्धिद्वयातिरिक्तेति साक्षादिति च वक्तव्यम् । कर्मेत्यादि । अवयविनोऽपि कर्मजन्य(१)त्वादसमवायीति।वेगस्यापि तथात्वादनेकाश्रितेति । सत्तादिवारणाय गुणत्वव्याप्येति गुणनिष्ठाभावप्रतियोग्यर्थकम् । कर्मजनक(२)व्यक्तिसंग्रहाय जातिगर्भता । गुणेति । गुणविशेषाणां ज्ञानादीनां प्रत्येकं लक्षणघटकत्वम् । कर्मविशेषो वेगाजन्यः । उक्तम् उक्तप्रायम् । तदभिमुखक्रियाया विभागस्य पूर्वसंयोगनाशस्य वोत्पादकालेऽपि तत्र द्रव्येऽन्यतरकर्मजः संयोग इष्यत आह । तत्संयोगानुकूलेति। संग्राह्यैकदेशं दर्शयति । यत्रेत्यादिना। कस्यचिदित्याद्यभ्युच्चयमात्रम्। यथा हि(३)संयोगस्य स्वजनककर्मणो नाशकत्वम् अन्यथोत्पन्नमात्रस्य कर्मणः पूर्वतनसंयोगेन च कुतो वा पूर्वसंयोगनाशकाले उत्पन्नस्य संयुज्यमानकर्मणस्तत्संयोगेन विनाशित्वे च संयोगानुत्पत्तिप्रसङ्गात् तथा स्वानुकूलविभागस्यापि । अनुकूलश्चैको द्वाविति(४) न कश्चिद्विशेष इति । अन्यतरकर्मजोभयकर्मजाभिघाताभ्यां जनितयोः शब्दयोर्वैलक्ष-

---

(१) कर्मजनक—इति (ख) पुस्तके।

(२) कर्माजनक—इति (ख) पुस्तके।

(३) तथाहि—इति (क) पुस्तके।

(४) संयुज्यमानकमर्णस्तत्कालविनाशात्, उत्तरसंयोगानुत्पत्तिप्रसङ्गात्तथापि अनुकूलाविभागस्याप्यनुकूलः एको द्वाविति—इति (क) पुस्तके।

ण्यानुभवाद्वैलक्षण्यासिद्धिरित्यपि वदन्ति । कर्म साक्षात्परम्परासाधारणस्वाश्रयसमवेतत्वशून्यमेव संयोगजनकं तेन न परमाणुकर्मणा तदीयद्व्यणुकाद्यन्त्यावयविपर्यन्ते तत्संयोगः । कारणं कार्यस्य समवायि, अकारणं तस्य कार्यस्य साक्षात्परम्परासाधारणसमवायित्वशून्यम् । तदुभयवृत्तिः संयोगस्तत्र कार्ये तेनाकारणेन(१) समं संयोगं जनयति । तेन न तुरीवीरणसंयोगात् पटवीरणसंयोगः । न वैकस्य कपालस्य कपालान्तरावयवपरम्परया संयोगात् तया समं संयोगो घटस्य । नाप्येकस्य पाणेरङ्गुल्या तरोः संयोगात् पाण्यन्तरे तरोः संयोगः । नापि शाखापाणिसंयोगात् तरुशरीरयोर्यावदन्योन्यावयवपरम्पराभ्यां संयोगः । केचित्तु साक्षात्परम्परासाधारणकार्यसमवायिवृत्तेरेव संयोगस्य तत्र कार्ये संयोगजनकत्वमिच्छन्ति । न च साधारणसमवायित्वं दुर्वचम् । तत्संयोगस्वरूपायोग्यत्वस्यैव प्रकृते तथात्वात् । तेषां तरुपरमाणुसंयोगादेव युगपदेव तत्परमाणवीयद्व्यणुकाद्यन्त्यावयविपर्यन्तानां तरुसंयोगः । एकतन्तुकपटवादिनस्तु अवयवस्य कर्मविशेषात् संयोगविशेषाच्चावयवावयविनोरपि संयोगं वदन्ति । संयोगेन च विभागो व्याख्यातः । एकतन्तुकपटवादिना क्वचिदवयवावयविनोरपि संयोगोपगमादाह ।

**यत्रैकेति ।**

**मूले तदकार्यत्व इति।** कार्यत्वमिह साक्षात्परम्परासाधारणम् । तेनैककपालीयपरमाणुसंयुक्तापरकपालारब्धे तत्परमाण्व-

(१) संयोगः कार्योभयाकरणेन- इति (क) पुस्तके ।



संयोगिनि घटे न व्यभिचारः । नत्संयोगिकार्यत्वादिति । अत्र संयोगस्य विशेषणत्वं स्वसमानकालीनतया ।

**प्रकाशे पार्थिव इत्यादि ।** तृतीयजलद्व्यणुकस्याविनश्यदवस्थेत्यादिः । तेन तदारम्भकसंयोगनाशकालोत्पन्नतदीयपरमाणुसंयोगशालिनि न व्यभिचारः ।

**मूले अत्र चेत्यादि ।** अत्र विभागजे विभागेऽपि कर्मानुप्रवेशो द्रष्टव्यः । युगपदुत्पन्नाभ्यामवयवविभागावयविकर्मभ्यामवयविनि विभागजननात् । अन्यत्रापि च । तथाहि शाखायां कर्म, ततः शाखापाणिविभागपाणिकर्मणी, अथ ताभ्यां तरुपाणिविभाग इति कर्मणा विभागस्य तद्विशेषसंयोगस्य च जननं प्रकृतेऽप्यक्षतम् । संयोगजेन च संयोगेन क्वचिद्विभागस्याविनाशनं तस्याभावात् न तु संयोगजत्वेनैवेति न विरोधसम्भावनेत्यभिसन्धायाह ।

**प्रकाशे अवयविनीत्यादि ।** अवयवकर्मणा विभागजननकालेऽवयविनि कर्मोत्पादासम्भवात् क्वचित्केवलेनावयवसंयोगेन क्वचिच्च केवलेनावयविकर्मणा संयोगोत्पाद इत्यर्थः । अवयवे कर्मणि सत्येवावयविनि कर्मोत्पादस्याश्रयनाशाद्विभागनाशं व्युत्पादयता भाष्यकारेणैवाभिधानादाह । अपि चेति । टीकाकृतां पुनरयमभिप्रायः कर्मसंयोगजन्यतावच्छेदिकयोरिव प्रमाणसिद्धाया उभयजन्यतावच्छेदिकाया अपि जातेः सौसादृश्य(१)तिरस्कारेण विविच्यानुपलम्भो न बाधकः । न च संयो-

(१) जातेर्गोसादृश्य—इति (क) पुस्तके ।

गद्वयकल्पनेनैवोपपत्तौ जातिभेदे मानाभावः । अनन्तसंयोगव्यक्तिकल्पनातो लाघवेनैकस्या एव जातेः कल्पनात् विजातीयसंयोगसामग्र्या प्रतिबन्धाच्च न तदानीमेकैकजातीयसंयोगद्वयोत्पादः । एतेन विभागो व्याख्यातः ।

मूले विभागम् अन्यतरकर्मजत्वादिना संयोगस्य विभजनम् ।

प्रकाशे अत्यन्ताभावत्वेति । प्रतियोग्यसमानदेशाजन्याभावत्वरूपस्यात्यन्ताभावत्वस्य प्रतियोगिदेशत्वे व्याघात इत्यर्थः । आश्रयनाशजन्यरूपादिध्वंसवारणाय अजन्येति । व्याघातवारणायात्यन्ताभावत्वमन्यथा निर्वक्ति । स्वप्रतियोगीत्यादि । न चेत्यादिः । देशः कालस्याप्युपलक्षकः । उपाधित्वात् सम्बन्धान्तरावच्छिन्नप्रतियोगिकाभावस्य सम्बन्धान्तरेण प्रतियोगिमति वृत्तेर्व्यभिचाराच्च । संयोगस्येत्यादि । वस्तुतो यथा प्रतियोगिप्रागभावयोर्भिन्नकालावच्छेदेनैकत्र वृत्तौ न विरोधस्तथा प्रतियोग्यत्यन्ताभावयोरपि भिन्नदेशावच्छेदेनान्यथासिद्धप्रत्यक्षबलात् । तथाचैकदा स्वात्यन्ताभावसामानाधिकरण्यमेव तयोरव्याप्यवृत्तित्वमिति ।

मूले नभो व्याप्नुयादिति । अव्यापकत्वे च संयोगस्यापि तथात्वं तद्वदेव चाविरुद्धम् । प्रकाशे–विभिचत्या-दीति । अत्रोत्तरशब्दस्य पूर्वपूर्वशब्ददेशव्यापकत्वे घनसङ्घट्टजन्यशब्दसन्तानान्तिमस्याद्यशब्ददेशपर्यन्तवृत्तित्वं स्यात् । न चैतदन्तरेण निमित्तपवनसंयोगस्य तावद्दूरव्यापकत्वं संभवति । तदनवच्छिन्ने शब्दानुत्पादात् । अत एव विंशत्यङ्गुल्यवच्छेदेन



विंशतेः प्रयत्नानां चरणशिरोवच्छेदेन च सुखदुःखयोर्युगपदेवोत्पादं वदन्ति । परन्तु दुर्घटप्रमाणकं च । न चोपदर्शिते नियमे प्रमाणम् । अधिकरणकार्याजनकत्वेनाव्यावर्तकं गुणत्वं परमनुपादेयम् । गुणासमवायिनोर्वा वैकल्पिकमुपादानं निरवयवशब्दाश्रयासिद्धिदशायां संदिग्धासिद्धिवारणाय । परमाणुरूपादिव्यावर्त्तकं च मूल एव प्रत्यक्षत्वे सतीति विशेषणीयं स्वसमानाधिकरणगुणासमवायिकारणत्वादिति तु प्रभाकरः । यत्र ( अत्र ? ) गुणासमवायित्वं चानुपादेयम् । द्रव्यध्वंसेति । शब्दस्यापि कारणनाशनाश्यत्वोपगमात्(१) । तच्चेति । अखण्डाभावे च न वैयर्थ्यं महाप्रलये च स्वाश्रयनाशादेव गुणनाशे क्षतिविरहान्न पृथक् कार्यकारणभावकल्पनेति हृदयम् । स्वाश्रयकालीनध्वंसप्रतियोगित्वादिति तदर्थः । स्वाश्रयवृत्तिध्वंसप्रतियोगित्वादिति तु प्रभाकरः ।

मूले स्वाश्रयादन्यत्रेत्यस्याश्रयेन्द्रियसन्निकर्षं विनेत्यर्थः । अग्रेऽपि स्वाश्रय एवेत्यस्याश्रयसन्निकर्ष एवेत्यर्थः । स्पर्शान्यत्वमात्रेण वा वायुविशेषगुणत्वाभावः साध्य इत्याह—अवयवीयत्वामिति ।

मूले नाद्यो नाध्यक्षविषयोऽध्यक्षयोग्यत्वात् तच्चारूपिबहिर्द्रव्यत्वात् । अरूपित्वं च रूपवत्त्वेनाप्रतिभासमानत्वात् आलोकादिसमवहितस्य महतो रूपवत्त्वे तथा प्रतिभाष्यारूपकत्वादित्यर्थः । शूलेमव उपनेत्यादि(?) पूर्वं विनष्टबुद्धेर्निमित्तस्य

---

(१) कारणनाश्यत्वोपगमात्—इति (क) पुस्तके ।

सम्बन्धस्य घटकतया कालसिद्धिराशङ्किता सम्प्रति तस्यावि-
षयस्य तस्येति न पौनरुक्त्यम् । संयुक्तेत्यादि समाधिसौ-
कुर्यात् । वस्तुतो नियमतो न धर्मिविशेषणत्वेन मानं तपनपरि-
स्पन्दान्तरितत्वादिबुद्धौ वैपरीत्यस्यैव दर्शनात् तपनपरिस्पन्दानां
स्वरूपसम्बन्धशून्यत्वे सति यथार्थविशिष्टबुद्धिविशेषणत्वादति-
रिक्तसम्बन्धसिद्धिः । विशेषणसिद्धिश्चातिरिक्तत्वसम्बन्धे बाध-
काभावात् । सिद्धेन चातिरिक्तसम्बन्धेन संयोगसमवायविर-
हविशेषितेन परम्परासम्बन्धसिद्धिः । दृष्टान्तश्च नीलीद्रव्योप-
रक्तपटादिसंसृष्टो नीलिमेति मूलसंदर्भः । परम्परेत्यादिकं स्व-
तन्त्रप्रकारमभिप्रेत्य । यद्यपीत्यादि । सिद्धिरप्रसिद्धिः । इदं
चापाततो नीलीद्रव्यनीलिम्नैव प्रसिद्धेरुपदर्शितत्वात् । समवे-
तत्वे सतीति स्वरूपसम्बन्धाभावपरं तेन ज्ञानादौ न व्यभिचारः।
स्वसमवेतत्वं स्वसंयोगित्वस्याप्युपलक्षकम् । तेन तत्संयुक्तद्र-
व्यव्युदासः । समवायं विना नासमवायिकारणत्वमतोऽस्तु
वेत्यादि । आकाशातिरिक्तवृत्तिरिति । आकाशावृ-
त्ति(१)रित्यर्थः । तेन द्रव्यत्वादौ न व्यभिचारः । शब्दव-
दिति व्यतिरेकदृष्टान्तः । अत्र वदन्ति । पिण्डादौ तपन-
परिस्पन्दस्य विशेषणतैव प्रत्यासत्तिरस्तु । न च सम्बन्धस्य
साधकमानमसति बाधकेऽतिरिक्तमेव तं विषयीकरोति माना-
भावात् नवातिरिक्तबाधकाभावाच्च । सिद्धिश्च साधकाभाव-
स्यैव बाधकत्वात् । न च विशेषणतातिरिक्तसम्बन्धनियता-

(१) आकाशावृत्तिः-इति (ख) पुस्तके ।



ऽभावज्ञानादावनेकान्ताद्विशेषणदाने चाप्रयोजकत्वात् । अत
एव च शब्दसुखादौ क्रियाविशिष्टबुद्धिः । अस्तु वा पिण्डादिवृ-
त्तिसत्तासामानाधिकरण्यमेव सम्बन्धः । अस्तु वा भगवतो जग-
दीशितुरेव प्रतिनियतं धर्मसंक्रामकत्वं भवतु च तत्संयोग एव
परत्वापरत्वयोरसमवायी । अप्रयोजकान्येवैतत्परिपन्थीनि
साधकानि वा कालस्यानुमानानि । एतेन दिगपि व्याख्याता ।
अपेक्षाबुद्धिविशेषाच्च विशेषः परत्वादीनामिति । संनि-
धानेन प्राचीप्रतीच्योरिव व्यवधानेन प्राचीप्रतीच्यो(१)र्निरूपण-
मभिप्रेत्योक्तं तदभूयस्त्वमिति । नानापुरुषैस्तत्त्वेनाश्रयमान-
( श्रीयमाण ? ) नानापुरुषापेक्षत्वं वा साधारण्यम् । वर्तमानवत्
प्राच्यादेरपि पुरुषान्तरापेक्षा । प्राच्याः प्रतीचीत्ववर्तमानत्वस्या-
प्यनुगतत्वमित्यन्यथा व्याचष्टे यन्निरूपितमिति । दक्षिण-
भागावच्छिन्नत्वं वामापेक्षया सन्निहितदक्षिणभागकत्वम् । एवं
दक्षिणापेक्षया सन्निहितवामभागकत्वं वामावच्छिन्नत्वम् । तच्च-
च्छरीरावधिकं चेदं दक्षिणत्वादिकम् । वस्तुतस्तु तदपेक्षया स्व-
मेव सन्निहितत्वव्यवहितत्वे तदवधिकोत्तरदक्षिणत्वे । अत एव
वृक्षघटवेदिकावह्न्याद्यवधिको लोके शास्त्रे च तद्व्यवहारः । गुरु-
त्वेत्यादि । उभयत्रापि तत्तत्क्रियानाश्रयत्वे सतीति वक्तव्यम् ।
तत्र च मध्यदेशस्य ऊर्ध्वावधिकोर्ध्वत्वस्याधोवधिकाधस्त्वस्य
च वारणाय तद्देशावस्थिततादृशवह्निक्रियाजन्यसंयोगाश्रयत्वं
तदवधिकोर्ध्वत्वं तद्देशावस्थिततपनजननसंयोगाश्रयत्वं तद-

(१) प्रतीचीप्राच्योः-इति (ख) पुस्तके ।

तदवधिकमधस्त्वं वक्तव्यम् । तथाच तत्तद्देशे वह्न्यादेरसत्त्वेऽज्ञाने च तादृशव्यवहारानुपपत्तिर्योग्यता च दुर्वचेति चिन्त्यम् । देवताविशेषसम्बन्धेन च प्राच्यादिनिर्वचनमत्यन्तमसत् । एकस्या एव दिशो निरूपकभेदेन प्राचीप्रतीच्यादिव्यवहारविषयत्वात् । सूर्येत्यादि । सूर्यपिण्डयोर्वारणाय सत्यन्तं तदुभयसंयोगमात्रार्थकम् । क्रियोपधायककालवारणाय संयोगेति । तादृशघटकत्वमात्रमुपादेयम् । शब्दसुखादीनां निमित्तसंयोगवशादेव प्रदेशनियमः ।

मूले च संयोगस्येत्यस्य निमित्तपवनसंयोगस्येत्यर्थः । मूले आकाशादय इत्यादि । विभवस्तेन परमाणुना तत्कर्मणा संयुज्यन्ते नित्यद्रव्यत्वे सति तद्वृत्तिक्रियाशून्यत्वात् चलत्परमाणुसंयुक्तपरमाण्वन्तरवदित्यर्थः । तत्र परमाणौ व्यभिचारवारणाय विशेष्यम् । यथाश्रुते द्रव्यमात्र एव परमाणुकर्मजन्यसंयोगसंभवात् । अनादौ च संसारे सर्वेषामेव परमाणूनां स्वेतरयावत्परमाणुभिस्तत्तत्कर्मणा संयोगसंभवेन विपक्षत्वानिश्चयात् । पक्षसमे च व्यभिचारसंशयस्यादोषत्वात् । उभयमते(१) तद्वारकविशेषणोपादाने सन्दिग्धव्याप्यत्वासिद्धिकत्वात् । विभवो न तत्परमाणुकर्मजन्यतत्संयोगवन्तः(२) नित्यत्वे सति निष्क्रियत्वात् गोत्वादिवत् । न कर्माजन्यपरमाणुसंयोगाश्रयाः नित्य-

(१) उभयमते—इति (ख) पुस्तके नास्ति ।

(२) तत्परमाणुकर्मजन्यतत्परमाणुसंयोगवन्तः—इति (क) पुस्तके ।



त्वात् परमाणुवत् । क्रियास्वरूपायोग्यत्वाद्वा रूपादिवत् । न तत्परमाणुकर्मजन्यतत्परमाणुसंयोगवन्तः(१) । तत एव तद्वदेव । विभुनिष्ठाः सर्वे तत्परमाणुसंयोगास्तत्परमाणुकर्मजन्याः नित्यमात्रवृत्तित्वे सति तदितरकर्माजन्यसंयोगत्वात् । निश्चलपरमाणौ चलत्परमाणुसंयोगवत् सर्वे परमाणुसंयोगाः कर्मजाः नित्यमात्रवृत्तिसंयोगत्वात् । परमाणुत्रय(२)संयोगवदित्यादौ वा तात्पर्यम् । आकाशादिकं कालवृत्तिसंयोगवत् द्रव्यत्वादेः कालसंयुक्तं वा कालान्यत्वे सति तत एवेत्यत्र पक्षधर्मकालान्यत्वावच्छिन्नस्य शुद्धस्य वा साध्यस्य(३) व्यापकं मूर्त्तत्वमुपाधिः अप्रयोजकत्वं च । आकाशादिकं न तथा कालान्यत्वे सत्यमूर्त्तत्वात् , अमूर्तत्वाद्वा । तत्सामग्रीराहितत्वाच्चेत्यत्र शुद्धस्य कालान्यत्वावच्छिन्नस्य वा साध्यस्य व्यापकमद्रव्यत्वमुपाधिः । अखण्डाभावत्वाच्च न व्याप्ये व्यर्थविशेषणत्वम् । अप्रयोजकत्वं च सामग्रीव्यावृत्त्या कार्यस्यैव व्यावृत्तेः । द्रव्यकार्यतावच्छेदकं चानुगतं जन्यत्वं जन्यभावत्वं वा । कर्मादिजन्यत्वं च विशेषाविश्रान्तम् । कार्यमात्रवृत्तित्वं च संयोगत्वस्यासिद्धमिति । यद्यपि नित्यं सन्देह एव प्राप्तस्तथापि आकाशादिकं कालसंयोगतदसमानाधिकरणान्यतरधर्मसमवायि समवायित्वादेरिति सामान्यतो दृष्टमक्लृप्तानेकसंयोगतत्सम्बन्धकल्पने गौर-

(१) न परमाणुकर्माजन्यपरमाणुसंयोगवत्-इति (ख) पुस्तके ।

(२) द्वय—इति (ख) पुस्तके ।

(३) पक्षस्य—इति (क) पुस्तके ।

वात् लाघवेन सिद्धेषु सिद्धस्य तादृशसामानाधिकरण्याभावस्य सम्बन्धमेव साधयतीति (१)तादृशसंयोगतद्ध्वंसदान्यतरसाधकान्मेयत्वादेर्लाघवेन तद्भेदसिद्धिरित्यपि वदन्ति ।

भाष्ये सा पुनरित्यादि । पृथग्गतिमत्त्वं परस्परसंयोगजनकगतिमत्त्वम् । द्वयोर्यथा चलयोः परमाण्वोर्मेषयोर्वा । अन्यतरस्य यथा परमाण्वाकाशयोः पशुपर्वतयोर्वा । युताश्रयाश्रयित्वं युते संयुक्ते आश्रये आश्रयित्वम् । एकतरस्य द्रव्यस्य स्वानाश्रये नान्यतरेण संयुक्ते समवेतत्वमिति यावत् । आश्रयत्वं चात्र साक्षात्परम्परासाधारणम् । तेनैकेन कपालेन तदवयवपरम्परया च संयुक्ते कपालान्तरे घटस्य समवेतत्वेऽपि न क्षतिः । एकतरसमवेतावृत्तिसंयोगजनको यस्तदेकतरप्रतियोगिकः संयोगः तद्वत्समवेतत्वं वा । द्वयमपीदं क्वचिद्द्वयोः क्वचिदेकतरस्य । व्यापकातिप्रसक्तेरदोषत्वे तु यथाश्रुतमेव साधीयः । संयोगानुत्पादस्तु कारणविरहादिति ।

मूले विशेषावित्यादि । विशेषौ संयोगौ कर्मजन्याजन्यौ संयोगौ कर्मजन्यस्य संयोगस्य व्यापकं पृथग्गतिमत्त्वं कर्माजन्यस्य च युताश्रयाश्रयित्वं तदुभयनिवृत्त्या तयोः संयोगयोर्निवृत्तेः साधनायेति ।

प्रकाशे युतसिद्धिप्रतीघातात् निरुक्तयुतसिद्धिद्वयव्यतिरेकप्रतीघातप्रसङ्गात् । युतसिद्धिसामान्यस्य तदुभयान्यतररूपस्य । आश्रयेति । आश्रयनाशकस्य न प्रातिस्विक-

(१) ल (न?)--इति (ख) पुस्तके ऽधिकः ।



पेण(१)कारणत्वमननुगमात् । आश्रयसमवायिकारणासमवायिकारणनाशत्वाभ्यामाश्रयनाशकत्वादिना वा तत्त्वे लाघवादाश्रयनाशत्वेनैव तदित्यर्थः ।

द्रव्ययोरनुत्पन्नसंयोगयोर्विभक्तप्रत्ययाभावमभिप्रेत्य मूले संयोगविनाश इत्युक्तम् ।

प्रकाशे संयोगत्वावच्छिन्नेति । उत्पन्नसंयोगत्वावच्छिन्नेत्यर्थः । ध्वंसस्य सामान्याभावत्वाभ्युपगमेऽपि अन्यदीयसंयोगध्वंसस्यान्यत्रासंभवादुत्पन्नत्वस्य तत्तत्कालभेदेन भिन्नतया तदवच्छिन्नाभावानामननुगमाच्चाह । स्वसमानेत्यादि । तदसमानकालीनत्वं तदनधिकरणकालावच्छिन्नत्वम् ।

मूले सत्याश्रय इति । नाशकान्तरं व्यवच्छिन्नम् ।

प्रकाशे समवायिकारणकेति कारणनाशाजन्योपलक्षकम् । गुणेति स्वरूपकथनम् । समवायिकारणनाशस्येति(२)प्रकृताभिप्रायेण । परत्वादेरिव संयोगस्याप्यसमवायिकारणनाशनाश्यत्वे कर्मजन्मनस्तस्य क्षणद्वयमात्रावस्थायित्वापत्तेः ।

मूले हस्तादितरुसंयोगनाशो न स्यादिति । विरोधिनं कारणनाशं च विना नाशानुत्पादात् कर्मणश्च समानाधिकरणस्य तदानीमसंभवात् व्यधिकरणस्य च तथात्वेऽतिप्रसङ्गादित्यर्थः । कारणनाशमाशङ्क्य निरस्यति । न चेत्यादिना ।

यथा समानाधिकरणत्वाविशेषेऽपि कश्चिदेव धर्मो नाशकः

(१) तत्तद्व्यक्तित्वेन—इति (ख) पुस्तके ।

(२) समवायिकारणस्येति--इति (ख) पुस्तके ।

कल्प्यते फलबलात् तथाऽकारणत्वाविशेषेऽपि(१) कश्चिदेव नाशकस्तथा । तत एवेत्याभिप्रायिकामाशङ्कां निरस्यति प्रकाशकारो न चेत्यादिना । आश्रयेति कारणनाशमात्रपरम् । कालादिनापि संस्कारनाशोपगमादाह । **समानाधिकरणस्येति** । क्वचिदसमवायिकारणनाशस्य समानाधिकरणत्वेऽपि नाशकत्वे तन्न तन्त्रम् । परन्त्विहापि तदतन्त्रत्वोपगमे नाशकत्वं संभवत्येव । नियमोऽपि चाप्रामाणिक इति ध्येयम् । व्यर्थेत्यस्य स्वमत इत्यादिः । **आश्रयेति** । आश्रयनाशाद्यजन्यध्वंसत्वादित्यर्थः । कर्मजनितेत्यस्य स्वरूपकथनमात्रत्वं द्योतयन्नाह । **विभागजेति** ।

**मूले स्वाश्रयेति** । स्वाश्रये तदाश्रितपरम्परायां च यः संयोगः कर्मणस्तन्नाशकत्वादित्यर्थः । त्रयोविंशतीत्यादि पूर्ववन्नेयम् । यद्यारम्भकसंयोगविरोधिविभागजनकस्य कर्मणोऽनारम्भकसंयोगविरोधिविभागः स्यात्(२) तदा विनैव प्रयासं कारणमात्रे विभागपूर्वको विभागः स्यात्, न त्वेतदस्तीति प्रकारान्तरेण तत्साधनीयमित्याह । अत्रेत्यादि । एवं चैकस्यैव कर्मणस्तादृशोभयविभागजनकत्वे कृतं वैजात्यद्वयकल्पनया समान्यत एवानारम्भकविरोधिविभागजनकत्वेन विशेषतश्चारम्भकविरोधिविभागजनकत्वेनैव सामञ्जस्यादित्यभिसंधायाह । तथा

(१) तथाऽकारणीयत्वाविशेषेऽपि—इति (ख) पुस्तके पाठः ।

(२) विरोधिविभागजनकत्वभावः सिद्धः स्यात्—इति (क) पुस्तके पाठः ।



चेत्यादि । नैयायिकास्तु एवञ्चेत्यादिनोक्तमेव साधीयः, एकस्यैव कर्मणस्तादृशोभयविभागजनकत्वे विरोधाभावात्, तादृशैकैकविभागजनकतावच्छेदकजातिद्वयकल्पने गौरवात्, वक्ष्यमाणानामनुमानानामप्रयोजकत्वादिति । विरुद्धत्वादिति अनवगतसाध्यसहचारेत्यादिलक्षणाभिप्रायेण । **द्रव्यानारम्भकेति** । तादृशकर्मजन्यसंयोगस्य स्वनाशकत्वाद्विभागेति । विभागजनकत्वात् विभागासमवायिकारणत्वात् । **आरम्भक एवेति** केवलं दृष्टान्तस्पष्टीकरणाय अनारम्भकसंयोगसहस्रसत्त्वेऽपि क्षतिविरहात् । स्थापनायां फलोपधानाभावः साध्यः । तथा च प्रत्यनुमानेऽवयवसंयोगनाशकालोत्पन्नावयविकर्मणि व्यभिचार इत्यविनश्यदवस्थेति । **सहकारीति** । वस्तुतो यथाकथञ्चित्कपालद्वयसंयोगाद्घटानुत्पत्तेरन्वयव्यतिरेकवतश्च सहकारिविशेषस्य विरहात् संयोगवैजात्यमेव घटजननौपयिकम् । अन्यथा कर्मणोऽपि सहकारिविशेषाधीनं विभागविशेषजनकत्वमिति तत्रापि वैजात्यं न स्यात् । भाष्योक्ता दिग्विशेषस्यापेक्षा संभवति प्रकृतेऽपि । परन्तु प्रमाणशून्या सुवचा च कर्माणि(१) । अतः समानाधिकरणस्यैव सा वक्तव्या । तादृशं च समवायिकारणं कार्यद्रव्यमेव तत्रास्ति । प्रकृते च तदसंभवात् । परिशेषेणारम्भकसंयोगनाशस्तज्जन्यः कार्यद्रव्यनाशो वा तादृश इत्यक्षरतात्पर्याभ्यामाह—**कारणेत्यादिना** । कर्मानपेक्षं विना कर्मापेक्षाम् । कर्मानपेक्ष्यमिति पाठे कर्मणोऽनपेक्षणीयमित्यर्थः । अङ्गुलीतरु-

(१) कर्मण्यपि—इति (ख) पुस्तके ।

विभागादित्यस्यावयवावयविविभागाधीनजन्मन इत्यादिः। चतुर्थविभागे कर्मणः पूर्ववर्तित्वेनापेक्षासंभवान्मूले पञ्चमेति।

प्रकाशे एकत्रेत्यादि। विशेष्यस्य व्यधिकरणत्वेऽपि विशेषणस्य समानाधिकरणत्वान्नोपवर्णितसापेक्षत्वव्याघात इति भावः। वस्तुतस्तु कारणाकारणविभागेनेव कारणमात्रविभागेनापि सत्येवावयविनि तदारम्भके च संयोगे विभागजनने विरोधाभावात् तद्विनाशापेक्षायां प्रमाणाभावः। कर्मत्वनियतं चानपेक्षकारणत्वं पूर्वं सूत्रं व्याचक्षाणैरेवास्माभिरुपदर्शितमिति(१)। वेणुदलविभाग इति पाठे वेणुदलयोर्विभाग इत्यर्थः। आकाशेति योग्यदेशोपलक्षकम्। यथा चानारम्भकसंयोगविरोधिविभागजनकस्य कर्मण आरम्भकसंयोगविरोधिविभागजनकत्वे दलविकाश एव कमलनाशप्रसङ्गस्तथा तथाविधस्यापि विभागस्य तथात्वे क्षणमात्राविलम्बादित्याह—द्रव्यारम्भकेत्यादिना।

भाष्ये इयमिति सावधारणम्। नित्यानामियमेवानित्यानां पुनः काचिदियमन्या च अन्यामाह(२)। युतेष्वाश्रयेषु समवाय इति। बहुत्वमसार्वत्रिकत्वादविवक्षितम्। नित्यानित्ययोस्तु यथासम्भवं द्वयीति। यद्यपि पूर्वोपवर्णितस्य मिथो विभागहेतुक्रियासम्बन्धस्य नातिप्रसङ्गसम्भावना तथापि यथाश्रुते शङ्का। मूले नन्वियमित्यादि। असमवायसहचारिणी असमवेतत्वव्याप्त्या। इत्थं च पृथगिति स्वरूपकथनमात्रम्। प-

(१) व्याचक्षाणैरस्माभिरुपपादितमिति—इति (ख) पुस्तके।

(२) काचिदियमन्या अन्याह—इति (ख) पुस्तके।



रस्परेति। द्रव्याणां परस्परपरिहारेण एकैकपरित्यागेन आश्रयेषु। अस्य विवरणम्, पृथग्भूतेषु एकतराश्रयाद्भिन्नेषु अन्यतराश्रयेषु, युतेषु मिथः संयुक्तेषु, समवायः। तथाच स्वस्वानाश्रयीभूतमिथःसंयुक्तपरस्पराश्रयसमवेतत्वमर्थः। यथा आप्यस्य द्व्यणुकस्य स्वानाश्रयपार्थिवपरमाणुसंयुक्त आप्ये परमाणौ पार्थिवद्व्यणुकस्य च स्वानाश्रयाप्यपरमाणुसंयुक्ते पार्थिवे परमाणौ समवेतत्वमिति घटपिपरमाण्वादेरपि परम्परया घटाश्रयत्वान्नातिप्रसङ्गः। नित्यानित्ययोस्तु एकतरस्यानित्यत्वे सति तदसमवेतत्वे तत्संयुक्तसमवेतद्रव्यत्वमन्यतरस्य। इदं पुनरिहावधेयम्। यदेतत्तयोरुभयोरपि न सर्वत्र प्राच्यत्वं नित्यानां तु द्वयोर्नित्यद्रव्यत्वे सत्यन्यतरस्य गतिमत्त्वम्। व्यापकं च सर्वसाधारणं द्वयोः परस्परासमवेतत्वे सत्यन्यतरस्य गतिमत्त्वम्। तच्च तद्योग्यता, मूर्त्तत्वमिति यावत्। असमवेतत्वं साक्षात्परम्परासाधारणसमवेतत्वव्यतिरेकः।

प्रकाशे अप्रत्यासन्नेति। प्रत्यासन्नत्वं समवायेन। समवायेन तत्प्रत्यासन्नं च द्वेधा तत्समवायित्वात् तत्समवेतत्वाच्च। तथा चैकतरसमवायिनः समवायेन यदप्रत्यासन्नं तदसमवायि तदसमवेतं वा। तत्र समवेतत्व(मन्यतरस्य अन्यतरसमवायिनः यत्समवायेनाप्रत्यासन्नं तत्समवेतत्वमपरस्य एककपालसमवायिनः समवायेनाप्रत्यासन्नं तत्समवेतत्वे(१)मपरस्य एककपालसमवायिनः समवायेनाप्रत्यासन्ने कपालान्तरे घटस्य समवेतत्वेऽपि घटसम-

(१) कोष्ठान्तर्गतः पाठः (क) पुस्तकेऽधिकः।

वायिसामान्यस्य समवायेनाप्रत्यासन्ने कपालस्य समवेतत्वं नास्तीति नातिप्रसङ्गः । परमाण्वोः समवायेन प्रत्यासन्नं तत्समवेतमेव प्रसिद्धमिति न द्व्यणुकयोरप्रसङ्गः । द्व्यणुकस्य त्रसरणुसमवाय्यसमवेतपरमाणुसमवेतत्वात् त्रसरणोश्च तद्व्यणुकसमवाय्यसमवेतद्व्यणुकान्तरसमवेतत्वात् साधारणरूपाभिधानम् । समवायित्वं पूर्ववत् ।

मूले अप्राप्तयोः सम्बन्धशून्ययोर्विद्यमानता एकक्षणवर्तमानत्वम् । तेन प्राक् समवायिनाशक्षणे च कार्यस्य सत्त्वेऽप्यदोषः । परस्परप्राप्तिप्रागभाववत्त्वं वा विवक्षितम् ।

प्रकाशे नश्यति न तिष्ठतीत्यर्थः ।

मूले उत्तरविभागेति । उत्पन्नमात्रस्यैवावयवविभागस्यावयवसंयोगनाशकाल एव नाशात् तत्पूर्वं चापेक्षणीयासंपत्तेरुत्तरकालं चासत्त्वादवयवाकाशविभागो न स्यादित्यर्थः । मूर्तविभागेति । यद्यारम्भकानारम्भकसंयोगविरोधिमूर्तमात्रवृत्तिविभागद्वयजनने न विरोधस्तदा विकाशमात्र एव कमलस्य नाशापत्तिरित्यर्थः । तस्मादिति । तथा चारम्भकसंयोगाविरोधिविभागजनकस्यैव कर्मण आरम्भकसंयोगविरोधिविभागजनकत्वं विरुध्येत न त्वनारम्भको यः संयोगस्तद्विरोधिविभागजनकस्य । तेनांशुतन्तुसंयोगस्य पटानारम्भकत्वेऽपि न क्षतिरिति मन्तव्यम् । यत्पुनरंशुतन्तुसंयोगस्यापि पटनिमित्तकारणत्वं द्रव्यानारम्भकेत्यत्र कारणत्वमात्रस्याभावो विवक्षितो न



त्वसमवायिकारणत्वस्यैवेति । तदसत् । तन्तुतुरीसंयोगविरोधिविभागजनकेन तन्तुकर्मणा पटारम्भकतन्तुद्वयसंयोगाविरोधिविभागजननप्रसङ्गात् । नन्वारम्भकसंयोगाविरोधिनं विभागं जनयत एव कर्मणोऽनारम्भकसंयोगविरोधिविभागजनकत्वं न पुनरनारम्भकसंयोगस्य विरोधिनं विभागं जनयत इत्यत्र किं नियामकम् । किं च अंशुतन्तुविभागेन कारणाकारणविभागमुद्रया विभागो जनयितव्यः कारणमात्रविभागमुद्रया वा । नाद्यः । तन्तोरेव तथा विभागसंभवात् । न द्वितीयः । अंशोः पटाकारणत्वात् । कारणत्वोपगमेऽपि समवायिकारणत्वविरहात् । समवायिकारणवृत्तेरेव विभागस्य कारणाकारणविभागजनकत्वात् । अन्यथा तुरीतन्त्वोर्दण्डकपालयोश्च विभागात्तन्तुकपालयोराकाशादिविभागप्रसङ्गात् । शक्यते चात्रापि कारणाकारणविभागस्थल इवापेक्षणीयो दिग्विशेषो वक्तुमत आह । अथवेति ॥

इति महामहोपाध्यायश्रीभट्टाचार्यरघुनाथशिरोमणिविरचिता

किरणावलीप्रकाशदीधितिः समाप्ता । विभागान्तगुणनिरूपणं च समाप्तम् ।

# शुद्धिपत्रम्

| पृष्ठ | पङ्क्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ४ | ११ | कालो | कालो |
| ७ | १२ | संयोम | संयोग |
| ७ | १९ | एकति | एकेति |
| ७ | २० | अपि चति | अपि चेति |
| ९ | ६ | रन्यरतरा | रन्यतरा |
| ६ | ११ | कर्मन्यता | कर्मजन्यता |
| ११ | ५ | गुणबद्वृत्ति | गुणवद्वृत्ति |
| ११ | १७ | चतुष्ठयं | चतुष्टयं |
| ११ | १८ | मृर्ति | मूर्ति |
| १७ | ९ | जानामत्यिादिं | जानामीत्यादि |
| १७ | २१ | (३) वर्ग-इति (ख) पुस्तके। | (३)तत्त्वम्-इति (ख) पुस्तके नास्ति। |
| १७ | २२ | मध्यपतितं-इति | वर्ग-इति |
| १८ | २४ | सजातियेति | सजातीयेति |
| १८ | १९ | (१) अभिप्रेतम्— | (१) मध्यपतितं— |
| १८ | २० | (२) तेनाणुत्वादौ नाव्याप्तिः-इति | (२) अभिप्रेतम्-इति |
| १८ | २१ | (३) अकारगुणा-पूर्वकत्वे सति- | (३) तेनाणुत्वादौ नाव्याप्तिः- |
| १८ | २२ | (४) उत्तरग्रन्था- | (४) अकारणगुणा-पूर्वकत्वे सति- |
| १९ | १९ | (१) अत एव पूर्वोक्तरीत्या-णुत्वे नाव्याप्तिः-इति (ख) पुस्तकेऽधिकः पाठः। | (१) उत्तरग्रन्था-इति (ख) पुस्तके। |

| पृष्ठ | पङ्क्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १९ | २१ | (२) | (२) अत एव पूर्वो-क्तरीत्याणुत्वे नाव्या-प्तिः–इति (ख) पुस्त-केऽधिकः पाठः । |
| २३ | १४-१५ | कर्म(१)त्वादि | (१)कर्मत्वादि |
| २४ | २ | सामाना | समाना |
| २७ | १ | पारमाण | परिमाण |
| २७ | ९ | स्वसामाना | स्वसमाना |
| २७ | १८ | यत्ततरस्मिन् | यत्तेतरस्मिन् |
| ३३ | २२ | तद्धृत्त्यन्यतर | तद्वृत्त्यन्यतर |
| ३५ | १६ | निमित्तस्त्वा | निमित्तस्वा |
| ५२ | ४ | प्रत्वत्त | प्रत्यत्त |
| ५६ | १७ | जातयि | जातीय |
| ६१ | २० | रुपो | रूपो |
| ६२ | १० | तावान्मात्र | तावन्मात्र |
| ६५ | १४ | रूपादिमत्त्युत्पत्ति | रूपादिमत्युत्पत्ति |
| ६७ | १० | भावत्वापेलत्तकम् | भावत्वोपलत्तकम् । |
| ६६ | १-२ | नवेत्यन्यदेतत् | न वेत्यन्यदेतत |
| ६९ | १९ | तच्छूशून्येनापि | तच्छून्येनापि |
| ७० | ११ | पेत्तणयी | पेत्तणीय |
| ७१ | ९ | रूपमादिर्येषां | रूपमादि येषां |
| ७२ | ७ | सजात्यं | साजात्यं |
| ७७ | ७ | गाह्यत्वम् | ग्राह्यत्वम |
| ८८ | ११ | वृत्तेरव | वृत्तेरेव |
| ९१ | २१ | शूलेमव | मूलमेव |
| ९७ | १ | पेण | रूपेण |
| ९८ | १७-१८ | समान्यत | सामान्यत |
| १०० | १ | वययावयवि | वयवावयवि |

# APPENDIX.

Some changes introduced by Raghunātha S'iromaṇi in the doctrines of the Nyāya-Vaiśeṣika System.

I–Padārtha:—

(a) Viśesha denied as a distinct category.

(b) Sankhyā, Svattva, S'akti, Vaiśishtya, Kāraṇatā, Kāryatā and Vishayatā admitted as separate categories.

II–Dravya:—

(a) Kāla, Dik and Ākāśa regarded as identical with Īśvara.

(b) Īśvara considered as devoid of Parimāṇa.

(c) Manas defined as an asamaveta bhūta.

(d) Paramāṇu and Dvyaṇuka denied.

(e) Bhūta and Mūrta mentioned as identical.

III–Guṇa:—

(a) Paratva and Aparatva denied as distinct guṇas.

(b) Prithaktva regarded identical with Anyonyābhāva.

(c) Rūpa and Sparśa shown as avyāpyavṛitti.

IV–Karman also mentioned as avyāpyavritti.

V–Sāmānya:—

(a) Sattā denied as a Jāti common to Dravya, Guṇa and Karman, but admitted as identical with Bhāvatva.

(b) Anubhūtatva denied as a Jāti common to four kinds of apprehension, but regarded as identical with perceptive knowledge.

VI-Samavāya admitted not as one, but as many.

VII-Abhāva:—

(a) Abhāva of ghaṭādyabhāva regarded as quite different.

(b) Only the destruction of an Asamavāyikāraṇa, and not that of a Samavāyikāraṇa, considered as destructive of a substance.

# INDEX.

## THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A. Rs. 1-12

No. 2—The Advaita Chintāmaṇi, by Rañgoji Bhaṭṭa,
Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra, a Commentray on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-2

No. 6--(Part I)-The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)-The Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-8

No 7—( Part II ) Ditto Ditto Rs. 1-4

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagnnātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-10

No. 9—(Part I)-The Bhakti Chandrikā, a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 0-15

No. 10-(Part I)-The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 1-2

No. 10-(Part II)—Do. Do. Rs. 2-12

No. 11-The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by S'añkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya. Rs. 0-9

No. 12-The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-2

No. 13-The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14-The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-14

No. 15-(Part I)-The Tripurārahasya. (Jñāna Khaṇḍa)
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A Rs. 0-14

No. 15-( Part-II )—Do. Do. Rs. 2-4

No. 15-( Part III )—Do. Do. Rs. 2-0

No. 15-( Part IV )—Do. with Introduction, etc. by Gopinath Kaviraj, M. A.

No. 16-The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1-2

No. 17-The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-14



No. 18-(Part I)-The Gorakṣa Siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0-14

No. 19-( Part. I )-The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. Rs 2-4

No. 19-( Part. II ) Ditto Ditto Rs. 2-12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20-The Mānsatattvaviveka by Viśvanātha Nyāyapañchānana Bhaṭṭāchārya.
Edited with Introduction etc. by P. Jagannātha S'āstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 0-12

No. 21-( Part I ) The Nyāya Siddhānta Mālā by Jayarāma Nyāya Pañchānana Bhaṭṭāchārya,
Edited with Introduction etc. by Mangal Deva S'āstrī M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1-2

No. 21-( Part-II ) Ditto Ditto Rs. 2-0

No. 22-The Dharmānubandhi S'lokachaturdaśī by S'ri S'eṣa Kṛṣṇa with a Commentary by Rāma Pandit.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares. Rs. 1-0

No. 23-Navarātrapradīpa by Nanda Pandit Dharmādhikārī.
Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra-S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by P. Gopinath Kaviraj, M. A., Principal, Government Sanskrit College, Benares. Rs. 2-0

No. 24-The S'rī Rāmatāpinīyopaniṣad with the Commentary called Rāma Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.

Ed. with Introduction etc. by Anantarāma S'āstrī Vetāla Sāhityopādhyāya, Post-Achārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs 3-12

No. 25-The Sāpiṇḍyakalpalatikā by Sadāśivadeva alias Āpadeva with a commentary by Nārāyaṇa Deva.
Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares. Rs. 1-4

No. 26-The Mṛgāṅkalekhā Nāṭikā by Viśvanātha Deva Kavi.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityācharya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1-0

No. 27-The Vidvachcharita Panchakam By Nārāyana S'āstri Khiste, Sāhityacharya, Assistant Librarian, Govt. Sanskrit College, Library, Sarasvati Bhavana, Benares. With an Introduction by Gopināth Kaviraja, M. A., Principal, Govt. Sanskrit College, Benares. Rs 2-0

No. 28-The Vrata Kos'a by Jagannātha S'āstri Hosiṅga Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares. With a Foreword by S'rī Gopinātha Kaviraja, M.A., Principal, Govt. Sanskrit College, Benares. Rs. 4-0

No. 29-The Vṛitti dīpikā By Mauni S'rī Kṛṣna Bhatta.
Edited with Introduction etc. by Pt. Gangadhara S'astri Bhāradvāja, Professor, Govt. Sanskrit College, Benares. Rs. 1-2

No. 30-The Padārtha Maṇḍanam By S'rī Venīdatta.
Edited with Introduction etc. by Pandit Gopāla S'āstri Nene, Professor, Govt. Sanskrit College, Benares. Rs. 0-14

No. 31 ( Part I)-The Tantraratna by Pārtha Sārathi Mis'ra.
Edited by M. M. Dr. Ganganatha Jha, M. A., D. Litt, Vice-Chancellor, Allahabad University, Allahabad Rs. 1-14

No. 32-The Tattvasāra by Rākhāldasa Nyāyaratna.
Edited with Introduction etc. by Harihara S'astri, Benares Hindu University.

No. 33-The Nyaya Kaustubha ( Part I ) by Mahadeva Puntamkar.
Edited with Introduction etc by Umes'a Miśra, M. A., Allahabad University, Allahabad.



No. 34-( Part I )The Advaita Vidyātilakam by S'rī Samarapuṅgava Dīkṣita. With a Commentary by S'rī Dharmayya Dīkṣita.
Edited with Introduction, etc, by Ganapati Lal Jha M. A., Sadholal Research Scholar, Govt. Sanskrit Library, Benares.

No. 35-The Dharma Vijaya Nāṭaka by Bhūdeva S'ukla.
Edited with Introduction etc, by Paṇdit Nārāyaṇa S'āstri Khiste, Asst. Librarian, Govt. Sanskrit Library, Benares.

No. 36-The Ananda Kanda Champu, by Mitra Misra.
Edited, with a Foreword by Gopinath Kaviraj, M. A., by Nanda Kishore Sāhityācharya, Research Scholar, Sanskrit College, Benares.

No. 37-The Upanidāna Sutra.
Edited with Introduction by Dr. Mangaldeva S'āstri.

No 38-The Kiranāvali prakās'a didhiti ( Guṇa ), by Raghunāth Siromani.
Edited by Pt. Badrināth Sāstri, M. A., Lucknow University

No. 39-The Rama Vijaya Mahākavya, by Rupanātha.
Edited by Pt. Ganapatilal Jha, M. A.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1) : its Evolution, by Gaṅgānātha Jhā.

(b) The View-point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) S'tudies in Hindu Law (2):—its sources, by Gaṅgānāth Jha

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj

(j) Nyāya Kusumāñjali ( English Translation ), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇā S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgānātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar. Rs. 5.



Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgānātha Jha.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda-Prātiśākhya, by Maṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans, by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs 5

Vol. V—

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vanaras as depicted in the Rāmayaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of the Ṛgveda, Vajasaneya, Taittirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āstri.

(e) Formal Training and the Ancient Indian Thought, by G.L. Sinha.

(f) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmatha nātha Roy.

(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

Vol. VI—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob..

(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.

(c) An Index etc. the Ramayana, by Manmatha nātha Roy.

(d) Studies in Hindu Law by M. M. Gaṅganatha Jha.

(e) The Mimamsa manuscripts in the Govt. Sanskrit Library (Benares), by Gopinātha Kavirāj.

(f) Notes and Queries, by Gopinātha Kavirāj.

